# मालतीमाधवं

नाम

प्रकरणम् ।

—⋄⋄⋄—

महाकविश्रीभवभूतिविरचितम् ।

जगद्धरकृतां टीकामवलम्ब्य

बि, ए, उपाधिधारिणा पण्डितकुलपतिना

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितया व्याख्यया समलङ्कृतम् ।

द्वितीयसंस्करणम् ।


सिद्धेश्वर यन्त्रे मुद्रितम् ।

———

१८८४ ।

প্রকাশক—শ্রীজীবানন্দবিদ্যাসাগর বি, এ,

২ নং রমানাথ মজুমদারের ষ্ট্রীট্, কলিকাতা ।

প্রিণ্টর—শ্রীসিদ্ধেশ্বর পান

৩৮ নং শিবনারায়ণ দাসের লেন

কলিকাতা ।



पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर वि, ए,

*PANDIT JIBANANDA VIDYASAGARA B, A.*

*Superintendent Free Sanskrit College, Calcutta.*

# मालतीमाधवं

## नाम

## प्रकरणम् ।



सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हि-
त्रासान्नासाग्ररन्ध्रं विशति फणिपतौ भोगसङ्कोचभाजि ।
गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे शूलपाणे-
र्वैनायक्यश्चिरं वो वदनविधुतयः पान्तु चीत्कारवत्यः ॥ ( १ )

अपिच । चूडापीडकपालसङ्कुलगलन्मन्दाकिनीवारयो

---

( १ ) इह खलु कविः मालतीमाधवं नाम प्रकरण मुद्दिश्य रङ्गविघ्नोपशान्तये कुशीलवैः कर्त्तव्यतया नाट्यवस्तुनः पूर्वं नान्दीं निर्दिशति सानन्दमित्यादि । रूपकमिदं लौकिकवृत्तत्वेन कविकल्पितत्वेन अमात्यनायकत्वेन च प्रकरणमित्युच्यते तथाचोक्तं दर्पणे । भवेत् प्रकरणे वृत्तं लौकिकं कविकल्पितम् । शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक् । आम्नायधर्मकामार्थपरो धीरप्रशान्तक इति । शूलपाणेः शिवस्य ताण्डवे नृत्ये नन्दिहस्तेन आहतः ताड़ितः यो मुरजः तस्य रवेण आहूतस्य कौमारबर्हिणः कार्त्तिकेयमयूरस्य त्रासात् भोगस्य फणायाः शरीरस्य वा यः सङ्कोचोऽप्रसारणं तं भजत इति तस्मिन् तथोक्ते फणिपतौ सर्पराजे नासाग्ररन्ध्रं नासिकान्तर्बिलं सानन्दं यथा तथा विशति सति । अत्र नासारन्ध्रमित्यनेनैव चरितार्थत्वेऽग्रपदं झटिति प्रवेशेनैव तस्य हर्षसूचनाय प्रवेशस्य प्राणरक्षकतया सानन्दमिति विशेषणं नानुपपन्नम् । गण्डयोः उड्डीनाभिः अलिमालाभिः मधुपश्रेणीभिः मुखरिताः सशब्दीकृताः ककुभो दिशो याभिस्तास्तथोक्ताः चीत्कारोऽत्युत्कटः शब्दः तद्विशिष्टा या वैनायक्यः विनायकाज्जाता वदनविधुतयः वो युष्मान् चिरं पान्तु विधुतीनामचेतनत्वेऽपि रक्षणकर्तृत्वं देवसम्बन्धित्वेनोपचारात् ।

विद्युत्प्रायललाटलोचनपुटज्योतिर्विमिश्रत्विषः।
पान्तु त्वामकठोरकेतकशिखासन्दिग्धमुग्धेन्दवो
भूतेशस्य भुजङ्गवल्लिवलयस्रङ्नद्धजूटा जटाः॥ (२)

अपिच। पक्ष्मालीपिङ्गलिम्नः कण इव तड़ितां यस्य कृत्स्नः समूहो
यस्मिन् ब्रह्माण्डमीषद्विघटितमुकुले कालयज्वा जुहाव।
अर्चिर्निष्टप्तचूड़ाशशिगलितसुधासारझङ्कारिकोणम्
तार्त्तीयीकं पुरारेस्तदवतु मदनप्लोषणं लोचनं वः॥ (३)

[ नान्द्यन्ते सूत्रधारः। (४) ]

[ अलमतिविस्तरेण। पुरतोऽवलोक्य। ]

---

(२) चूडेति। चूड़ायां य आपीड़ः वक्रिममाला तस्य कपालैः सङ्कुलं व्याप्तं गलत् पतत् मन्दाकिनीवारि यासु तास्तथोक्ताः। विद्युत्प्रायस्य तड़िन्निभस्य ललाटे लोचनपुटस्य भालाक्षिपुटस्य ज्योतिषा विमिश्राः त्विषो यासां ता अतएव अकठोरासु कोमलासु केतकशिखासु केतकीकुसुमापीडेषु सन्दिग्धो भ्रान्तिविषयो मुग्धः सुन्दर इन्दुर्याभिस्ताः, तथा भुजङ्गा एव वल्लरी लतास्ता एव वलयाः स्रजः ताभिर्नद्धो बद्धो जूटः समूहः यासां ता भूतेशस्य धूर्जटेर्जटास्त्वां पान्तु रक्षन्तु अत्राप्युपचारात्तथात्वम्।

(३) पक्ष्मालीति। यस्य लोचनस्य पक्ष्मालीपिङ्गलिम्नः नेत्रलोमराजिपिङ्गलस्य समूहस्तड़ितां कृत्स्नः कण इव, तथा कालयज्वा कालरूपो याजकः यस्मिन् लोचने ईषद्विघटितमुकुले किञ्चित्समुन्मीषिते सति, ब्रह्माण्डं जुहाव अर्चिर्भिः स्फुलिङ्गैर्निष्टप्तः नितरां तापितः यच्चूड़ाशशी ललाटेन्दुस्तस्मात् गलितः यः सुधासारः अमृतप्रवाहस्तैर्झङ्कारी शब्दायमानः कोणः अपाङ्गदेशो यस्य भालेन्दोर्गलितत्वेन नेत्रापाङ्गदेश एव पतनं सम्भवतीतिभावः। तत् मदनप्लोषणं स्मरदाहकं पुरारेः शिवस्य तार्त्तीयिकं तृतीयं लोचनं वो युष्मान् अवतु रक्षतु।

(४) नान्द्यन्त इति। नान्दीलक्षणं यथा आशीर्वचन संयुक्ता स्तुतिर्यस्मात् प्रयुज्यते। देवद्विजनृपादीनां तस्मान्नान्दीति विश्रुता। इति दर्पणः। अत्र द्वादशपदा नान्दी। सङ्खशङ्खचन्द्राब्जकोककैरवशंसिनी। पदैर्युक्ता द्वादश-

अये ! उदितभूयिष्ठ (५) एष भगवानशेषभुवनद्वीपदीपकस्तपनस्तमुपतिष्ठे। [ प्रणम्य ]।

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्त्ते !
धुर्य्यां लक्ष्मीमथ मयि भृशं धेहि देव ! प्रसीद।
यद्यत्पापं प्रतिजहि जगन्नाथ ! नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन् ! भूयसे मङ्गलाय ॥ (६)

[ नेपथ्याभिमुखमवलोक्य। ] मारिष ! सुविहितानि रङ्गमङ्गलानि सन्निपतितश्च (७) भगवतः कालप्रियनाथस्य यात्राप्रसङ्गेन नानादिगन्तवास्तव्यो (८) महाजनसमाजः। आदिष्टश्चास्मि विद्वज्जनपरिषदा, यथा, केनचिदपूर्वप्रकरणेन वयं विनोदयितव्या इति। तत्किमित्युदासते (९) भरताः।

---

भिरष्टाभिर्वा पदैरुतेति लक्षणात् मङ्गल्यचन्द्रयोः शंसनाच्च मङ्गल्यचन्द्रप्रतिपादिका नान्दी। नान्द्यन्ते सूत्रधारेण पूर्वरङ्गस्य कर्त्तव्यतया तन्निर्देशः।

(५) उदितभूयिष्ठ उदितं भूयिष्ठं बहुलं यस्य सः। किञ्चिदवशिष्टमपूर्णोदय इति भावः।

(६) कल्याणेति हे विश्वमूर्त्ते ! अखिलस्वरूप ! त्वं कल्याणानां माङ्गलिकानां महसां तेजसां भाजनं आधारोऽसि। हे देव ! धुर्य्यां महतीं लक्ष्मीं सम्पत्तिञ्च मयि भृशमतिशयेन धेहि प्रतिपादय त्वमित्यध्याहार्य्यम्। प्रसीद प्रसन्नो भव हे जगन्नाथ ! नम्रस्य मे मम यद्यत् पापं विद्यत इति शेषः। तत् प्रतिजहि अपनोदय हे भगवन् ! भूयसे प्रभूताय मङ्गलाय मङ्गलं विधातुं भद्रं कल्याणजनकं भद्रमभीष्टं वितर समर्पय। अत्र सम्बोधनचतुष्टयानामुपादानं फलदानस्यावश्यम्भावित्वसूचनार्थेति।

(७) सुविहितानि रङ्गमङ्गलानि रङ्गस्थलस्य मङ्गलानि कार्य्याणि सुष्ठु सम्पादितानि, सन्निपतितः उपस्थितः। कालप्रियनाथस्य तद्देशस्थदेवभेदस्य।

(८) दिगन्तवास्तव्यः दिङ्मण्डलवासी।

(९) उदासते, उदासीनचित्ताः तिष्ठन्ति। भरताः नटाः।

[ प्रविश्य पारिपार्श्विकः ] ( १० )। भाव! ( ११ ) परिषन्निर्दिष्टगुणं प्रबन्धं नाधिगच्छामः।

सूत्र। मारिष! कतमे ते गुणास्तत्र यानुदाहरन्त्यार्य्या विदग्धा मिश्रा भगवन्तो भूमिदेवाश्च।

नटः।

भूम्ना रसानां गहनाः प्रयोगाः सौहार्द्दहृद्यानि विचेष्टितानि।
औद्धत्यमायोजितकामसूत्रं चित्रा कथा वाचि विदग्धता च (१२)

सूत्र। स्मृतं तर्हि।

नटः। भाव! किमिव ?।

सूत्र। अस्ति दक्षिणापथे विदर्भेषु पद्मपुरं नाम नगरम्। तत्र केचित्तैत्तिरीयिणः काश्यपाश्चरणगुरवः पङ्क्तिपावनाः पञ्चाग्नयो धृतव्रताः सोमपीथिनो ब्राह्मणा ब्रह्मवादिनः (१३) प्रतिवसन्ति स्म।

---

( १० ) पारिपार्श्विकलक्षणं यथा भारतीयनाट्यशास्त्रे। सूत्रधारस्य पार्श्वे यः प्रचरन् कुरुतेऽर्थनाम्। काव्यार्थसूचनालापैः स भवेत् पारिपार्श्विकः।

( ११ ) भाव! विद्वन्। परिषदा दर्शकेन निर्दिष्टो गुणो यत्र तम्।

( १२ ) भूम्ना रसनामिति। रसानां शृङ्गारादीनां भूम्नातिशय्येन गहना दुष्प्रवेशा गम्भीरेति यावत सौहार्द्देन प्रेम्णा हृद्यानि हृद्गतानि विचेष्टितानि नायकनायिकयो रुभयोर्व्यापारविशेषाः, आयोजितकामसूत्रं कृतमदनलक्षण मौद्धत्यं नायकगुणप्रकर्षरूपं, चित्रा विस्मापयित्री कथा, वाचि विदग्धता च वाङ्नैपुण्यमेतानि यत्र सन्तीत्यर्थः। एवंविधं नाट्यं अभिनयितु मादिशन्ति विद्वांस इति शेषः।

( १३ ) तैत्तिरीयिणः तैत्तिरीयशाखाध्यायिनः, तद्विद इत्यर्थः। काश्यपाः काश्यपगोत्रापत्यानि पंक्तिपावनाः सर्वश्रेष्ठास्ततः पावनत्वमित्यर्थः पञ्चाग्नयः शालीनाग्निकाः दक्षिणाग्नि गार्हपत्याहवनीय सभ्यावसथ्यरूपाग्नि पञ्चकोपासकाः। सोमपीथिनः सोमरसपायिनः ब्रह्मविदः वेदज्ञाः।

ते श्रोत्रियास्तत्त्वविनिश्चयाय भूरि श्रुतं शाश्वतमाद्रियन्ते ।
इष्टाय पूर्त्ताय च कर्म्मणेऽर्थान् दारानपत्याय, तपोऽर्थमायुः ॥
( १४ )

तदामुष्यायणस्य तत्रभवतः सुगृहीतनाम्नो भट्टगोपालस्य पौत्रः पवित्रकीर्त्तेर्नीलकण्ठस्यात्मसम्भवो भट्टश्रीकण्ठपद-लाञ्छनो, भवभूतिनामा, जातूकर्णीपुत्रः, कविर्निसर्गसौहृदेन भरतेषु स्वकृतिमेवंप्रायगुणभूयसीमस्माकमर्पितवान् यत्र खल्वियं वाचो युक्तिः । (क)

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्म्मा,
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥ ( १५ )

---

(क) तदामुष्यायणस्य तद्गोत्रोद्भवस्य । तत्रभवतः पूज्यस्य सुगृहीतनाम्नः पुण्य-श्लोकस्य । श्रीःसरस्वती कण्ठे यस्य सः श्रीकण्ठः तद्वाचकं पदं लाञ्छनं चिह्नं यस्य सः नाम्ना श्रीकण्ठः इति भावः । भवभूतिः नामान्तरमेतत् । जतूकर्णगोत्रोत्पन्ना जातूकर्णी भवभूतिमाता तत्पुत्रः । भरतेषु नटेषु । वाचोयुक्तिः वचनरचनम् ।

---

( १४ ) त इति । ते श्रोत्रिया ब्रह्मनिष्ठास्तत्त्वविनिश्चयाय, ब्रह्मज्ञानाय तत्त्व-परार्थमिति भावः शाश्वतं नित्यं श्रुतं औपनिषदविद्यां भूरि बहु इष्टाय यागादिकाय पूर्त्ताय खातादिकाय च कर्मणे तदर्थमित्यर्थः । अर्थान् धनसञ्चयान् तथा अप-त्याय पुत्रार्थमेव दारान् भार्य्याः पुत्रार्थे क्रियते भार्य्या इति शासनात् । तपोऽर्थं तपस्यायै आयुरेतानि आद्रियन्ते आदरं कुर्वन्तीत्यर्थः ।

( १५ ) येनामेति । ये जनाः केचित् इह प्रकरणाख्यरूपकभेदे नोऽस्माकं ममेति शेषः, बहुत्वं गौरवे । अवज्ञामवधीरणां प्रथयन्ति उद्घोषयन्ति व्याहर-न्तीत्यर्थः । नामेति खल्वर्थे ते जनाः किमपि अत्यल्पमेव मत्प्रणीतरूपकविशेष-रसास्वादनप्रकारं जानन्ति, सुतरां तान् प्रति एष ग्रन्थकरणोद्यमरूपः मम यत्नो

अपिच। यद्वेदाध्ययनं, तथोपनिषदां सांख्यस्य, योगस्य च ज्ञानं तत्कथनेन किं ? न हि ततः कश्चिद्गुणो नाटके।

यत्प्रौढ़त्वमुदारता च वचसां यच्चार्थतो गौरवम्,
तच्चेदस्ति ततस्तदेव गमकं पाण्डित्यवैदग्ध्ययोः॥ ( १६ )

ततो, यदस्माकमर्पितं प्रियसुहृदाऽत्रभवता भवभूतिनाम्ना प्रकरणं स्वकृतं मालतीमाधवं नाम, तदेव तत्रभवतः कालप्रियनाथस्य पुरतः प्रयोगेण प्रख्यापयितुमुद्यताः तत्सर्वे कुशीलवाः सङ्गीतप्रयोगेण मत्समीहितसम्पादनाय प्रवर्त्तन्ताम्।

नटः। [ स्मृत्वा। ] एवं क्रियते युष्मदादेशः किन्तु या यस्य युज्यते भूमिका, तां खलु तथैव भावेन सर्वे वर्ग्याः पाठिताः, सौगतपारिव्राजिकायास्तु कामन्दक्याः प्रथमभूमिकां भाव एवाधीते, तदन्तेवासिन्यास्त्वहमवलोकितायाः।

सूत्र। ततः किम्।

---

न भवतीति शेषः। अज्ञाश्चेत् सर्वे तर्हि कथं यत्नस्त्वया क्रियत इत्याशङ्क्याह उत्पत्स्यते इति। हि यतो मम समानधर्मा तुल्यगुणः कोऽपि जन इति शेषः। उत्पत्स्यते जनिष्यति यतः कालो निरवधिर्निःसीमा अस्ति, पृथ्वीच धरण्यपि विपुला सुविस्तृता अस्ति विद्यते। अत्र ये विज्ञास्ते मान्या येऽप्यज्ञास्ते हीना इत्याद्यर्थापत्त्याऽर्थापत्तिरलङ्कारः।

( १६ ) यद्वेति। यद्वेदाध्ययनं तथा उपनिषदां शारीरकमीमांसाग्रन्थानां साङ्ख्यस्य कापिलोक्तस्य योगस्य पतञ्जलिप्रणीतस्य पातञ्जलस्य च ज्ञानं तत्कथनेन तयोः साङ्ख्ययोगयोः कथनेन च किं ? नहि नाटके ततः कश्चित् गुणोऽस्ति। किन्तु वचसां यत् प्रौढ़त्वं गाम्भीर्य्यभावः यद्वा प्रौढ़त्वं पदार्थे वाक्यरचनं वाक्यार्थे च पदरचनम्। प्रसादः सारल्यं उदारता अग्राम्यत्वं यच्च अर्थतः अर्थे गौरवं तच्च चेद् यदि विद्येत ततस्तर्हि तदेव हि पाण्डित्यवैदग्ध्ययोर्बुधत्वनैपुण्ययोर्गमकं प्रतिपादकम्।

नटः। ततः प्रकरणनायकस्य मालतीवल्लभस्य माधवस्य वर्णिकापरिग्रहः कथम्?

सूत्र। मकरन्दकलहंसप्रवेशावसरे तत्सुविहितम्।

नटः। तर्हि तत्प्रसिद्धप्रयोगादेवात्रभवतः सामाजिकानुपास्महे।

सूत्र। वाढं, एषोऽस्मि कामन्दकी संवृत्तः।

नटः। अहमप्यवलोकिता। [इति परिक्रम्य निष्क्रान्तौ।]

[प्रस्तावना। (१७)]

[ततः परिव्रत्य रक्तपट्टिकानेपथ्ये कामन्दक्यवलोकिते प्रविशतः]

कामन्दकी। वत्से! अवलोकिते!

अवलोकिता। अणवेदु भअवदी।

काम। अपि नाम तयोः कल्याणिनोर्भूरिवसुदेवराताऽपत्ययोर्मालतीमाधवयोरभिमतः पाणिग्रहः स्यात्?। [वामाक्षिस्पन्दनं सूचयित्वा सहर्षम्।]

विवृण्वतेव कल्याणमान्तरङ्गेन चक्षुषा।
स्फुरता वामकेनापि दाक्षिण्यमवलम्ब्यते॥ (१८)

अव। महन्तो क्खु भअवदीए एसो चित्तविक्खेवो।

---

(१७) प्रस्तावनालक्षणमाह दर्पणकारः। चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः। आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा।

(१८) विवृण्वतेति। कल्याणं शुभं विवृण्वता कथयितु मारभमाणेनेवेत्युत्प्रेक्षा आन्तरङ्गेन चक्षुषा हृदयग्राहिणा वामकेन अदक्षिणेन अननुकूलेनापि स्फुरता सता दाक्षिण्यं असव्यत्वं आनुकूल्यञ्च अवलम्ब्यते ध्रियते।

अच्चरीयं, अच्चरीयं, जं दाणिं चीरचीवरपरिच्छदं पिण्डवाद-मेत्तपाणअन्तीं भअवदीं, ईदिसे आआसे, अमच्चभूरिवसू णिओएदि। तहिं उक्खण्डिदसंसारावग्गहो अप्पा तुह्मेहिं णिउज्जिअदि (क)।

काम। वत्से! मा मैवं ब्रूहि।

यन्मां विधेयविषये स भवान्नियुङ्क्ते,
स्नेहस्य तत्फलमसौ प्रणयस्य सारः।
प्राणैस्तपोभिरथवाभिमतं मदीयैः,
कृत्यं घटेत सुहृदो, यदि तत्कृतं स्यात् ॥ (१९)

अयि, किं न वेत्सि यदेकत्र नो विद्यापरिग्रहाय नाना-दिगन्तवासिनां साहचर्य्यमासीत्, तदैव चास्मत्सौदामिनी-समक्षमनयोर्भूरिवसुदेवरातयोर्वृत्तेयं प्रतिज्ञा, अवश्यमावा-भ्यामपत्यसम्बन्धः कर्त्तव्य इति। तदिदानीं विदर्भराज-

---

(क) महान् खलु भवत्या एष चित्तविक्षेपः। आश्चर्य्यमाश्चर्य्यं, यदिदानीं चीरचीवरपरिच्छदां पिण्डपातमात्रप्राणयन्तीं भगवतीं ईदृशे आयासे अमात्य-भूरिवसुर्नियोजयति। तत्रोत्खण्डितसंसारावग्रह आत्मा युष्माभिर्नियुज्यते। उत्-खण्डितः उन्मूलितः संसाररूपः अपकृष्टः ग्रहः येन सः।

---

(१९) यदिति। स भवान् पूज्यः भूरिवसुः मालतीपिता विधेयविषये कर्त्तव्यविषये यत् मां नियुङ्क्ते प्रेरयति तत् स्नेहस्य फलं, असौ प्रणयस्य सारः सारभागः उत्कर्षो निर्य्यासो वा अन्यथा कथं मां नियुञ्जीतेति भावः। मदीयैः प्राणैरथवा तपोभिः सुहृदः मित्रस्य अभिमतम् ईप्सितं कृत्यं कार्य्यं यदि घटेत निष्पद्येत तत् कृत्यं कार्य्यं कृतं सम्पादितं स्यात् प्राणादिभिरपि कार्य्यं सम्पादनी-यम् इति मन्तव्यमित्यर्थः।

(२०) अपत्येति। अपत्यस्य कन्यायाः सम्बन्धविधेः प्रतिज्ञा प्रियस्य सुहृदः

मन्त्रिणा सता देवरातेन, माधवं पुत्रमान्वीक्षिकीश्रवणाय, कुण्डिनपुरादिमां पद्मावतीं प्रहिण्वता सुविहितम्।

अपत्यसम्बन्धविधिप्रतिज्ञा प्रियस्य नीता सुहृदः स्मृतिश्च।
अलोकसामान्यगुणस्तनूजः प्ररोचनार्थं प्रकटीकृतश्च॥ (२०)

अव। तदो, किंति मालदीं अमच्चो अप्पणा माहवस्स ण पड़िवादेदि, जेण चोरिआविआहे भअवदीं तुवरावेदि? (ख)

काम। तां याचते नरपतेर्नर्मसुहृन्नन्दनो नृपमुखेन।
तत्साक्षात्प्रतिषेधः कोपाय शिवस्त्वयमुपायः॥ (२१)

अव। अच्चरीयं! अच्चरीयं! ण क्खु अमच्चो माहवस्स णामम्पि जाणादित्ति णिरवेक्खदाए लक्खीअदि (ग)।

काम। संवरणं हि तत्।

---

(ख) ततः किमिति मालतीममात्यो माधवस्य आत्मना न प्रतिपादयति। येन चौरिकाविवाहे भगवतीं त्वरयति।

(ग) आश्चर्यमाश्चर्यम्! न खल्वमात्यो माधवस्य नामापि जानातीति निरपेक्षतया लक्ष्यते।

---

प्रियसखस्य भूरिवसोः स्मृतिश्च स्मरणञ्च नीता प्रापिता अलोकसामान्यगुणः भूतलदुर्लभगुणस्तनूजः सुतः माधवः वर इत्यर्थः प्ररोचनार्थं प्रकटीकृतः प्रकाशितः विवाहप्रवृत्तिसाधनार्थम् स्फुटीकृतः इत्यर्थः।

(२१) तामिति। नन्दननामा राज्ञः नर्मसुहृत् अन्तःपुरसचिवः नृपमुखेन नृपद्वारा तां मालतीं याचते। तत्र साक्षात् निषेधः राज्ञः कोपाय भविष्यति। अतः कारणात् अयं तु मद्द्वारा गुप्तसंयोजनरूपः उपायः शिवः परिणाममङ्गलकरः।

विशेषतस्तु बालत्वात्तयोर्विवृतभावयोः ।
तेन माधवमालत्योः कार्य्यः स्वमतिनिह्नवः ॥ ( २२ )

अपिच । अनुरागप्रवादस्तु वत्सयोः सार्वलौकिकः ।
श्रेयोऽप्यस्माकमेवं हि प्रतार्य्यौ राजनन्दनौ ॥ ( २३ )

पश्य, वहिः सर्वाकारप्रगुणरमणीयं व्यवहरन्,
पराभ्यूहस्थानान्यपि लघुतराणि स्थगयति ।
जनं विद्वानेकः सकलमभिसन्धाय कपटै-
स्तटस्थः स्वानर्थान् घटयति, च मौनञ्च भजते ॥ (२४)

अव । मएवि तुह्म वअणादो, तेण तेण वअणोवसासेन भूरिवसुमन्दिरासरराअमग्गेण माहवो सच्चारीअदि । ( घ )

---

( घ ) मयापि युष्मद्वचनात्तेन तेन वचनोपन्यासेन, भूरिवसुमन्दिरासन्नराजमार्गेण माधवः सञ्चार्य्यते ।

---

( २२ ) विशेषत इति । विशेषतस्तु विवृतभावयोर्विदिताभिप्राययोः तयोः मालतीमाधवयोर्बालत्वादज्ञत्वात् तेन अमात्येन भूरिवसुना स्वमतिनिह्नवः आत्मज्ञान गोपनं कार्य्यः करणीयः, तावपि यथा प्रकृतं न जानीतस्तथा कृतमित्यर्थः ।

( २३ ) अनुरागेति । वत्सयोरनुरागप्रवादस्तु गुप्तमिलनख्यापनजनश्रुतिस्तु सार्वलौकिकः, सर्वलोकेषु विदितः ख्यातः एवं अस्माकमपि श्रेयः अभीष्टं हि यस्मात् राजनन्दनौ राजा नृपतिः नन्दनः नृपतेः नर्मसुहृत् च तौ प्रतार्य्यौ वञ्चनीयौ । मालतीमाधवयोरन्योन्यानुरागेण गान्धर्वपरिणयः सञ्जातः न मया कारि इति राज्ञः समक्षे पश्चात् वक्तव्यमिति भावः ।

( २४ ) वहिरिति । एको विद्वान् तटस्थः उदासीन इव वहिर्वाह्ये सर्वाकारेण सर्वावयवेण प्रगुणरमणीयं प्रकृष्टगुणसौन्दर्य्यं व्यवहरन् कथयन् लघुतराणि स्वल्पान्यपि पराभ्यूहस्थानानि परतर्कस्थलानि स्थगयति निवारयति । तथा जनं स्वभिन्नं कपटैर्व्याजात् सकलमभिसन्धाय वञ्चयित्वा स्वान् अर्थान् प्रयोजनानि घटयति योजयति मौनञ्च भजते तूष्णीमास्ते ।

काम। कथितमिव नो मालतीधात्रेय्या लवङ्गिकया।

भूयोभूयः सविधनगरीरथ्यया पर्य्यटन्तं
दृष्ट्वा, दृष्ट्वा, भवनवलभीतुङ्गवातायनस्था।
साक्षात्कामं नवमिव रतिर्मालतीमाधवं यत्
गाढ़ोत्कण्ठालुलितलुलितैरङ्गकैस्ताम्यतीति॥ (२५)

अव। वाढ़ं, जदो ताए वि उक्कण्ठाविणोदणिमित्तं माहवपड़िच्छन्दअं आलिहिदं, तं लवङ्गिआए अज्ज मन्दारिआए हत्थे णिहिदं दाव (ङ)

काम। [विचिन्त्य।] सुविहितं लवङ्गिकया, यतो. माधवानुचरः कलहंसकस्तां विहारदासीं मन्दारिकां कामयते, इत्यनेन तीर्थेन घटेत तत्प्रतिछन्दकं उपोद्घातेन माधवान्तिकमुपेयादित्यभिप्रायः।

अव। अज्ज, माहवोवि कोदूहलमुप्पादिअ, मए प्पउत्तमअणमहूसवं मअरंदुज्जाणं पभादे अणुप्पेसिदो, तहिं किल मालदी गमिस्सदि, तदो अण्णोण्णदंसणं भोदुत्ति (च)

---

(ङ) वाढ़ं, यतस्तयाऽप्युत्कण्ठाविनोदनिमित्तं माधवप्रतिच्छन्दकमालिखितं तल्लवङ्गिकया अद्य मन्दारिकायाहस्ते निहितं तावत्। वाढ़ं, अतितरामनुरक्ता सेत्यर्थः। प्रतिच्छन्दकं प्रतिकृतिम्।

(च) अद्य माधवोऽपि कौतूहलमुत्पाद्य मया प्रवृत्तमदनमहोत्सवं मदनोद्यानं प्रभातेऽनुप्रेषितस्तत्र किल मालती गमिष्यति, ततोऽन्योन्यदर्शनं भवत्विति।

---

(२५) भूय इति। भवनवलभीतुङ्गवातायनस्था प्रासादोच्चस्थलस्थगवाक्षसन्निकटवर्त्तिनी मालती सविधनगरीरथ्यया सन्निकटस्थितनगरीमार्गेण पर्य्यटन्तं सञ्चरन्तं माधवं नवं मनोहरं साक्षात् कामं कन्दर्पं रतिरिव भूयोभूयः अभीक्ष्णं अभीक्ष्ण्ये द्विरुक्तिः। दृष्ट्वा दृष्ट्वा पुनः पुनरवलोक्य। यत् यतो गाढ़ोत्कण्ठालुलितलुलितैर्भृशोत्कण्ठाव्यथितैरङ्गकैर्मृदवयवैस्ताम्यतीति व्यथत इति।

काम। साधु, वत्से,! साधु, अनेन मत्प्रियाभियोगेन स्मारयसि मे पूर्वशिष्यां सौदामिनीम्।

अव। भअवदि! सा सौदामिणी अहुणा, समासादिदअच्चरीअमन्तसिद्धिप्पहावा, सिरिअपब्बदे कावालिअव्वदं धारेदि (छ)।

काम। कुतः पुनरियं वार्त्ता?

अव। अत्थि, एत्थ णअरे, महासमसाणप्पदेसे, कराला चामुण्डा (ज)

काम। अस्ति, या किल विविधजीवोपहारप्रियेति साहसिकानां प्रवादः।

अव। तहिं क्खु, सिरिपव्वदादो आअदस्स, रत्तिविहारिणो णादिदूरारस्सवासिणो साधअस्स, मुण्डधारिणोऽघोरघण्टणामधेअस्स, अन्तेवासिणी महाप्पभावा कवालकुण्डला णाम, अणुसञ्झं समाअच्छदि, तदो इअं पउत्ती (झ)

काम। सर्वं सौदामिन्यां सम्भाव्यते।

अव। अलं दाव एदिणा। भअवदि! एसोवि सहअरो माहवस्स, बालमित्तो मअरंदो णाम, णंदणस्स बहिणिं

---

(छ) भगवति! सा सौदामिनी अधुना समासादिताश्चर्यमन्त्रसिद्धिप्रभावा श्रीपर्वते कापालिकव्रतं धारयति।

(ज) अस्त्यत्र नगरे महाश्मशानप्रदेशे कराला नाम चामुण्डा।

(झ) तत्र खलु श्रीपर्वतादागतस्य रात्रिविहारिणो नातिदूरारण्यवासिनः साधकस्य, मुण्डधारिणोऽघोरघण्टनामधेयस्य, अन्तेवासिनी महाप्रभावा कपालकुण्डला नाम, अनुसन्ध्यं समागच्छति, ततः इयं प्रवृत्तिः। साधकस्य योगिजनस्य। मुण्डधारिणः कापालिकस्य। प्रवृत्तिर्वार्त्ता।

(ञ) अलं तावदेतेन। भगवति! एषोऽपि सहचरो माधवस्य, बाल-

मदअंतिअं जइ समुव्वहदि, तंपि णाम माहवस्स दुदीअं पिअं किदं भोदि (अ)

काम। नियुक्तैव मया मत्प्रियसखी तत्र बुद्धरक्षिता।

अव। सुविहिदं भअवदीए किदम्।

काम। [ विचिन्त्य। ] तदुत्तिष्ठ, माधवप्रवृत्तिमुपलभ्य, मालतीमेव पश्यावः।

[ इत्युभे उत्तिष्ठतः। ]

काम। [ विचिन्त्य। ] अत्युदारप्रकृतिर्मालती, तन्निपुणं निसृष्टार्थदूतीकल्पस्तन्त्रयितव्यः। * सर्वथा।

शरज्ज्योत्स्ना कान्तं कुमुदमिव तं नन्दयतु सा,
सुजातं कल्याणीभवतु कृतकृत्यः स च युवा।
वरीयानन्योन्यप्रगुणनिर्माणनिपुणो,
विधातुर्व्यापारः फलतु च मनोज्ञश्च भवतु ॥ २६ ॥

[ इति निष्क्रान्ते विष्कम्भकः ] ( २७ )

---

मिवं मकरन्दो नाम, नन्दनस्य भगिनीं मदयन्तिकां यदि समुद्वहति, तदपि नाम माधवस्य द्वितीयं प्रियं कृतं भवति।

* अत्युदारा अत्युदात्ता प्रकृतिः यस्याः सा। नायकस्य नायिकाया वा अभिप्रायं ज्ञात्वा स्वमत्या या कार्य्यं साधयति सा निसृष्टार्था दूती तस्याः कल्पः व्यापारः तन्त्रयितव्यः प्रस्तावनीयः इतिभावः।

---

( २६ ) शरदिति। सा मालती शरज्ज्योत्स्ना शारदीया कौमुदी कान्तं रम्यं कुमुदमिव सुजातं शोभनजन्मानं तं माधवं नन्दयतु सन्तोषयतु स च युवा माधवः कृतकृत्यः कल्याणीभवतु वरीयान् वरिष्ठः अन्योन्यस्य प्रगुणगुण उत्कृष्ट-गुणस्तन्निर्माणनिपुणस्तद्रचनाकुशलः विधातुः स्रष्टुर्व्यापारश्च फलतु फलवान् भवतु मनोज्ञश्च भवतु।

( २७) विष्कम्भकलक्षणमाह दर्पणकारः वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः। संक्षिप्तार्थन्तु विष्कम्भ आदावङ्कस्य दर्शित इति।

[ ततः प्रविशति गृहीतचित्रोपकरणः कलहंसः । ]

कल । कहिं दाणिं तुलिदमअरद्धअरूआवलेवविब्भमावखित्तमालदीहिअअमाहप्पं णाहमाहवं पेक्खिस्सं । [ परिक्रम्य । ] परिस्संतोह्मि, जाव इमस्सिं उज्जाणे मुहुत्तं विस्समिअ, मअरंदसहअरं णाहमाहवं पेक्खिस्सं ( ट )

[ इति प्रविश्योपविशति । ततः प्रविशति मकरन्दः ]

मक । कथितमवलोकितया मदनोद्यानं गतो माधव इति, भवतु, तत्रैव गच्छामि । [परिक्रम्य दृष्ट्वा च । ] दिष्ट्या अयं वयस्य इत एवाभिवर्त्तते । [ निरूप्य । ] अस्य तु

गमनमलसं, शून्या दृष्टिः, शरीरमसौष्ठवम्,
श्वसितमधिकं, किं न्वेतत् स्यात्किमन्यदितोऽथवा ।
भ्रमति भुवने कन्दर्पाज्ञा, विकारि च यौवनम्,
ललितमधुरा स्ते ते भावाः क्षिपन्ति च धीरताम् ॥ (२८)

---

( ट ) कुत्रेदानीं तुलितमकरध्वजरूपावलेपविभ्रमावक्षिप्तमालतीहृदयमाहात्म्यं नाथमाधवं प्रेक्षिष्ये । परिश्रान्तोऽस्मि यावदस्मिन्नुद्याने मुहूर्त्तं विश्रम्य मकरन्दसहचरं नाथमाधवं प्रेक्षिष्ये । उपकरणम् उपढौकनम् । तुलितः मकरध्वजस्य कामस्य रूपावलेपः रूपगर्वः येन एवंविधेन विभ्रमेण अवक्षिप्त तिरस्कृतं मालतीहृदयस्य माहात्म्यं गाम्भीर्य्यं येन तम् ।

---

( २८ ) गमनमिति । अलसं गमनं गन्तुमयमशक्त इत्यर्थः । दृष्टिर्नेत्रं शून्या बाह्यपदार्थज्ञानाक्षमा शरीरमसौष्ठवं मालिन्यसमुपेतमिति । अधिकं स्वभावादतिरिक्तं श्वसितं निश्वासः एतत्सर्वं किं नु स्यात् ? अथवा इतोऽनङ्गात् अन्यत् किम् । कामजमुत रोगजमिति संशय्य अथवेति संशयच्छेदमाह । नेदं कृत्यं रोगकृतं किन्तु कामकृतमेवेति । भुवने संसारे कन्दर्पाज्ञा भ्रमति सर्वं जनं आस्कन्दति । एतेनास्याः कामाज्ञाया अविजेयत्वं सूचितम् । यौवनञ्च विकारि, उन्मादकारि, एतदप्यसह्यमित्यर्थः । ललितमधुरा मृदुरुचिरास्ते ते प्रसिद्धा

[ ततः प्रविशति यथानिर्दिष्टो माधवः । ]

माधवः । (२९) [ स्वगतं ] ।

तामिन्दुसुन्दरमुखीं सुचिरं विभाव्य
चेतः कथं कथमपि व्यपवर्त्तते मे ।
लज्जां विजित्य, विनयं विनिवार्य्य, धैर्य्य-
मुन्मथ्य, मन्यरविवेकमकाण्ड एव ॥ (३०)

आश्चर्य्यम् । यद्विस्मयस्तिमितमस्तमितान्यभाव-
मानन्दमन्दममृतप्लवनादिवाभूत् ।
तत्सन्निधौ तदधुना हृदयं मदीय-
मङ्गारचुम्बितमिव व्यथमानमास्ते ॥ (३१)

मक । सखे ! माधव ! इत इतः ।

माध । [परिक्रम्य] । कथं, प्रियवयस्यो मम मकरन्दः ।

मक । [ उपसृत्य । ] सखे ! ललाटन्तपस्तपति घर्मां-शुस्तदस्मिन् उद्याने मुहूर्त्तमुपविशावः ।

माध । यथा प्रियवयस्याय रोचते । [इत्युभावुपविशतः] ।

---

भावाः पदार्था धीरतां धैर्य्यं चिपन्ति छिन्दन्ति । अत्र नर्मस्फोटाख्या कौशिकी वृत्तिः नर्मस्फोटो भावलेशैः सूचितात्परसो मतः इति साहित्यदर्पणे ।

( २९ ) स्वगतलक्षणं यथा "यत्तु श्राव्यं न सर्वस्य स्वगतं तदिहोच्यते ।"

( ३० ) तामिति । इन्दुसुन्दरमुखीं विधुमुखीं तां मालतीं सुचिरं बहुक्षण-पर्य्यन्तं विभाव्य निरूप्य अकाण्ड एव अकस्मादेव मे मम मन्यरविवेकं अल्पज्ञानं चेतश्चित्तं लज्जां विजित्य विनयं विनिवार्य्य धैर्य्यमुन्मथ्य कथं कथमप्यतिकष्टेन व्यपवर्त्तते निवर्त्तते । मालत्यां अत्यर्थं लग्नं मे चित्तं इतिभावः ।

( ३१ ) यदिति । यन्मदीयं हृदयं विस्मयस्तिमितम् आश्चर्य्यस्तब्धम् अस्त-मितान्यभावं केवलं तदेकपरायणम् आनन्दमन्दं हर्षजड़ञ्च अमृतप्लवनादिव सुधारसादिव तत्सन्निधौ प्रियान्तिके अभूत् तदानीं प्रियारूपमीक्षित मचलवत्तस्थौ तन्मदीयं हृदय मधुना अङ्गारचुम्बितमिव अङ्गारस्पृष्टमिव तद्विरहे इति शेषः ।

कल। [ दृष्ट्वा। ] कधं, मअरंदसहअरो इदं ज्जेव बालबउलुज्जाणं अलङ्करेदि माहवो, ता दंसेमि, मअणवेअणाखिज्जमाणमालदीलोअणसुहावहं अत्तणो से पडिच्छंदअं। अहवा मुहुत्तं बिस्सामसोक्खं दाव अणुभोदु। ( ठ )

मक। तदस्यैव तावत् उच्छ्वसितकुसुमकेशरकषायशीतलामोदवासितोद्यानस्य * काञ्चनपादपस्याधस्तादुपविशावः।

[ तथा कुरुतः। ]

मक। वयस्य! माधव! अद्यैव तावत्सकलनगराङ्गनाजनप्रवर्त्तितमहोत्सवाभिराममदनोद्यानयात्राप्रतिनिवृत्तमन्यादृशं भवन्तमवधारयामि, अपि नाम मनागवतीर्णोऽसि रतिरमणवाणगोचरम् ?

[ माधवो लज्जया अधोमुखस्तिष्ठति। ]

मक। [ विहस्य। ] तत्किमवनतमुग्धमुखपुण्डरीकस्तिष्ठसि ?

पश्य। (३१) अन्येषु जन्तुषु रजस्तमसावृतेषु,
विश्वस्य धातरि समः परमेश्वरे च।

---

( ठ ) कथं मकरन्दसहचर इदमेव बालवकुलोद्यानमलङ्करोति माधवस्तद्दर्शयामि मदनवेदनाखिद्यमानमालतीलोचनसुखावहम् आत्मनस्तस्य प्रतिच्छन्दकम्। अथवा मुहूर्त्तं विश्रामसौख्यं तावदनुभवतु।

* उच्छसितानाम् उत्फुल्लानां कुसुमानां ये केशरा: किञ्जल्का: तै: कषाय: लोहित: शीतलश्च य: आमोद: तेन वासितं सुरभीकृतं उद्यानं येन तस्य।

---

सर्वमङ्गारमयं, जायत इत्यर्थ:। अतएव व्यथमानं क्लिश्यत् आस्ते। अधुना केवलं क्लेशमनुभवति।

( ३२ ) अन्येष्विति। अन्येषु जन्तुषु प्राणिषु रजस्तमसा आवृतेषु आच्छादितेषु अथ विश्वस्य धातरि निर्माणकारके ब्रह्मणि परमेश्वरे महादेवे च रजस्तमसावृते

सोऽयं प्रसिद्धविभवः खलु चित्तजन्मा
सा लज्जया तव कथञ्चिदपह्नुतिर्भूत् ॥

माध। वयस्य! किं न कथयामि श्रूयतां। गतोऽहमवलोकिताजनितकौतुकः कामदेवायतनं, तत्र च इतस्ततः परिक्रम्यावलोक्य च परिश्रमादुल्लसितमदिरामोदमधुरपरिमलाकृष्टसकलमिलदलिपटलसङ्कुलाकुलितवकुलमुकुलावलीमनोहराक्षरणरमणीयस्याङ्गनभुवो बालवकुलस्य आलवालपरिसरे स्थितः। तत्र च यदृच्छया निरन्तरनिपतितानि कुसुमानि आदाय विदग्धरचनामनोहरां स्रजमभिनिर्मातुमारब्धवानस्मि। अनन्तरञ्च सञ्चारिणीव देवस्य मकरकेतोर्जगद्विजयवैजयन्तिका, निर्गत्य गर्भभवनादुज्ज्वलविदग्धमुग्धनेपथ्यविरचनाविभावितकुमारीभावा महानुभावप्रकृतिः अत्युदारपरिजना कापि तत्र एव आगतवती।

(२२) सा रामणीयकनिधेरधिदेवता वा
सौन्दर्य्यसारसमुदायनिकेतनं वा।

---

सांख्यादिनये तु परमेश्वरस्य गुणत्रयसामान्यविशिष्टत्वेनैयमुक्तिरित्यर्थः। सन्नः अविचलितः। परमेश्वरापेक्षया कामस्य हीनत्वेऽपि तत्सम्बन्धरूपकल्पनादतिशयोक्तिः। सोऽयं प्रसिद्धविभवः विख्यातमाहात्म्यः चित्तजन्मा मनोजः कामः खलु निश्चये। ते तव लज्जया कथचित् कष्टेन अपह्नुतिर्माभूत्। लज्जां कृत्वा प्रकृतोत्तरदाने मा मौनावलम्बिना भवता भाव्यमिति भावः। स्मरचेष्टितमनुल्लङ्घनीयमस्तीति प्रसिद्धम्।

(२२) सेति। हे सखे! सा रामणीयकनिधेः सौन्दर्य्याकरस्य अधिदेवता आभरणस्याप्याभरणमिति भावः। अथवा सौन्दर्य्यसारसमुदायानां लावण्यशोभाकान्त्यादीनां निकेतनमास्पदीभूता विधेयप्राधान्यात् नपुंसकत्वम्। तस्याः प्रियस्या नियतं निश्चितं इन्दुसुधामृणालज्योत्स्नादि कारणं मदनस्य वेधा मदन एव सृष्टिकारकः तादृशीपमादीनां प्रयोक्ता मदन एव भवति। एकत्र

तस्याः, सखे! नियतमिन्दुसुधामृणाल-
ज्योत्स्नादि कारणमभून्मदनस्य वेधाः॥

अथ सा प्रणयिनीभिः अनुचरीभिः अविरलकुसुमसञ्चयावचयलीलादोहदिनीभिः अभ्यर्थ्यमाना, तमेव बालवकुलपादपोद्देशमागतवती, तस्याश्च कस्मिंश्चिदपि महाभागधेयजन्मनि * बहुदिवसोपचीयमानमिव मन्मथव्यथाविकारमुपलब्धवानस्मि।

यतः तस्याः। परिस्पन्दिमृणालीम्लानमङ्गं, प्रवृत्तिः,
कथमपि परिवारप्रार्थनाभिः क्रियासु।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदपाण्डुः कपोलः॥ (३४)

सा पुनः मम प्रथमदर्शनक्षणात्प्रभृति अमृतवर्त्तिरिव चक्षुषोः अतिशयानन्दमुत्पादयन्ती, अयस्कान्तमणिशलाकेव लोहधातुमन्तःकरणमाकृष्टवती, किं बहुना,

(३५) सन्तापसन्ततिमहाव्यसनाय तस्या-
मासक्तमेतदनपेक्षितहेतु चेतः।

---

सौन्दर्य्यदिदृक्षयेव उपमासामान्यधर्मेण इयं निर्मिता अत्र एकस्यां मालत्यामाधारभूतायाम् अनेकेषाम् इन्द्वादीनामाधेयानां सम्बन्धकल्पनात् परिकरालङ्कारः। तदुक्तम् आधाराधेययोरानुरूप्यात् परिकरो मत इति लक्षणात्।

* महाभाग्ययुक्ते पुरुषे।

( ३४ ) परिस्पन्दितेति। अङ्गं तस्या इत्यर्थः परिस्पन्दितमृणालीम्लानं निष्पीड़ितबिसनालमलिनं, परिवाराणामात्मीयानां प्रार्थनाभिः प्रार्थनावाक्यैः क्रियासु कर्म्मसु कथमपि प्रवृत्तिर्दृश्यत इति शेषः। एतेन तस्या विषयनिवृत्तिरुक्ता। किञ्चेति चार्थः अभिनवयोः करिदन्तयोःच्छेद इव पाण्डुः कपोलस्तस्या इत्यर्थः। निष्कलङ्कस्य कलङ्करहितस्य हिमांशोश्चन्द्रस्य लक्ष्मीं शोभां कलयति धत्ते इत्यर्थः। चन्द्रापेक्षयापि तस्या मुखस्योत्कृष्टत्व मुक्तम्।

( ३५ ) सन्तापेति। सन्तापस्य सन्ततिः प्रवाहः सैव महाव्यसनं विपुल-

प्रायः शुभञ्च विदधात्यशुभञ्च जन्तोः,
सर्वङ्कषा भगवती भवितव्यतैव ॥

मक। वयस्य माधव! स्नेहश्च निमित्तसव्यपेक्ष इति विप्रतिषिद्धमेतत्।

पश्य। व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते।
विकसति हि पतङ्गस्योदये पुण्डरीकम्
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ (३६)
ततस्ततः?

माध। ततश्च तत्र,
सभ्रूविलासमथ सोऽयमितीरयित्वा,
सप्रत्यभिज्ञमिव मामवलोक्य तस्याः।

---

विपद्, तदर्थमेव एतत् चेतो हृदय मस्तीत्यर्थः। अनपेक्षितहेतु कारणमनपेक्ष्यैव तस्या मासक्तमनुरक्तम्। तदवलम्बनेन नैव सुखं दृश्यते प्रत्युत केवलं सन्तापराशिर्वर्द्धते इत्यर्थः। अत्रार्थान्तरं न्यस्यति, सर्वङ्कषा सर्वहरा भगवती भवितव्यतैव अवश्यम्भावि प्राक्तनकर्म प्रायो बाहुल्येन जन्तोः प्राणिनः शुभञ्च अशुभञ्च विदधाति करोति। जनानां सुखदुःखं अदृष्टस्यैव कारणत्वात् भवितव्यतामूलक मेवात्र दुःखमिति तात्पर्य्यार्थः।

(३६) व्यतिषजतीति। आन्तरः अन्तरगतः कोऽपि हेतुः पदार्थान् व्यतिषजति सम्मेलयति। प्रीतयः प्रेमाणः बहिरुपाधीन् बाह्यहेतून् न संश्रयन्ते नावलम्बन्ते खलूत्प्रेक्षायाम्। पदार्थान्तरमेलने अन्तर्गतो हेतुरेव तत्र सम्पादकत्वेन निश्चितः प्रीत्यादयस्तु बाह्यहेतूनां सौन्दर्य्यादीना मवलम्बने नापि समर्था इत्यर्थः। पतङ्गोदये सूर्य्योदये पुण्डरीकं कमलमतिकोमलमपीत्यर्थः। विकसति स्फुटति, हिमरश्मौ हिमांशौ उद्गते उदिते चन्द्रकान्तो मणिविशेषः द्रवति गलति तीव्रातीव्रयोः सूर्य्येन्दुकरयोः सम्बन्धेन कमलपाषाणपदार्थद्वयस्य विकसनद्रवणाभ्यां तादृशकार्य्यं प्रति आन्तरिकहेतुत्वमायातीत्यर्थः। अतः अत्र स्वाभाविक एव स्नेहः इति तात्पर्य्यम्।

अन्योन्यभावचतुरेण सखीजनेन,
मुक्तास्तदा स्मितसुधामधुराः कटाक्षाः॥ (३७)

मक। [स्वगतम्।] कथं प्रत्यभिज्ञापि नाम?

माध। अथ ताः सलीलमुत्तालकरकमलललितताल्लिकातरलवलयावलीकम् उत्त्रस्तमत्तकलहंसविभ्रमाभिरामचरणसञ्चरण--झणझणाय--मानमञ्जीरमञ्जुशिञ्जितानुविद्धमेखलाकलापकिङ्किणीरणत्कारमुखरं प्रतिनिवृत्य भर्तृदारिके! दिष्ट्या वर्द्धामहे, यदत्रैव कोऽपि कस्यापि तिष्ठतीति माम् अङ्गुलीदलविलासेन आख्यातवत्यः।

मक। [स्वगतम्]। हन्त, महतः प्रागनुरागस्योद्भेदः।

कल। [आकर्ण्य]। कथं सरसरमणीआणुबन्धिणी इत्थीअणकधा? (ङ)

मक। ततस्ततः।

माध। अत्रान्तरे किमपि वाग्विभवातिवृत्त-
वैचित्रमुल्लसितविभ्रमसुत्पलाक्ष्याः।
तद्भूरिसात्त्विकविकारमपास्तधैर्य-
माचार्य्यकं विजयि मान्मथमाविरासीत्॥ (३८)

---

(३७) सभ्रूविलासेति। अन्योन्यभावचतुरेण परस्परानङ्गरसनिपुणेन तस्याः मालत्याः सखीजनेन सोऽयम् अयं सः यन्निमित्तं सखि! त्वं क्लिश्नसीत्यर्थः। इति सभ्रूविलासं सभ्रूभङ्गमित्यर्थः। इति वचनं ईरयित्वा कथयित्वा, प्रत्यभिज्ञा अनुभवज्ञानं तया सह वर्त्तमानं सप्रत्यभिज्ञं पूर्वानुभूतमिव मामवलोक्य तदा तत्काले स्मितमेव सुधा तया मधुराः कटाक्षा अपाङ्गनिक्षेपा मुक्ताः क्षिप्ता इत्यर्थः।

(३८) अत्रान्तर इति। अत्रान्तरे तादृशसमये उत्पलाक्ष्याः पङ्कजाक्ष्याः किमप्यवाच्यं वाग्विभवातिवृत्तवैचित्रं वाक्प्रपञ्चातीतवैचित्र्यम् उल्लसितविभ्रमं विभ्रमसहितं भूरिसात्त्विकविकारं विविधसात्त्विकाङ्गलक्षणसमेतम् अपास्तधैर्य्यं

ततश्च । स्तिमितविकसितानामुल्लसद्भ्रूलतानाम्,
मसृणमुकुलितानां प्रान्तविस्तारभाजाम् ।
प्रतिनयननिपाते किञ्चिदाकुञ्चितानाम्,
विविधमहमभूवं पात्रमालोकितानाम् ॥ (३९)

तैश्च । अलसवलितमुग्धस्निग्धनिष्पन्दमन्दै-
रधिकविकसदन्तर्विस्मयस्मेरतारैः ।
हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षै-
रपहृतमपविद्धं पीतमुन्मूलितञ्च ॥ (४०)

एवमहन्तु तस्याः सर्वाकारहृदयङ्गमायाः सम्भाव्यमान-स्नेहरसेनाभिसन्धिना विधेयीकृतोऽपि पारिप्लवत्व मात्मनोऽप-निह्नोतुकामः, प्राक्प्रस्तुतस्य वकुलदाम्नो यथा कथञ्चिदवशेषं ग्रथितवानेव, ततो मिलितवेत्रशस्त्रपाणिवर्षवरप्रायपुरुषपरि-वारा, गजवधूमारुह्य, नगरगामिनं मार्गम् इन्दुवदना अल-ङ्कृतवती । तदा च ।

---

धैर्य्यनाशि अतएव विजयि अन्यैरजेयमित्यर्थः । तत् प्रसिद्धं मान्मथं मन्मथ-सम्बन्धि आचार्य्यकं गुरुत्वं कामजनितचेष्टितमित्यर्थः आविरासीत् प्रादुर्बभूव ।

(३९) स्तिमितेति । स्तिमितविकसितानां निश्चलस्फुटानां उल्लसद्भ्रू-लतानां विचलितभ्रुवां मसृणमुकुलितानां मृदुस्निग्धमुकुलभावानां प्रान्तविस्तार-भाजां विस्तृतापाङ्गदेशानां, प्रतिनयननिपाते नयननिपातं प्रति विभक्त्यर्थेऽव्ययी-भावः । निमेषपतनकाले इत्यर्थः । किञ्चिदाकुञ्चितानां किञ्चिन्मुकुलितानाम् आलोकितानां नयनानां अहं विविधम् अनेकप्रकारं पात्रं भाजनमभूवम् जातः ।

(४०) अलसेति । अलसवलितमुग्धस्निग्धनिष्पन्दा अतएव मन्दैः, जाड्य-मापन्नैः, अधिकविकसदन्तः, अधिकं विकसत् अन्तर्येषां तैः विस्मयस्मेरतारैः विस्मययुक्ततारकैः तैश्च तैरिति विशेषणसमासः । पक्ष्मलाक्ष्याः निविड़पक्ष्म-समेताक्ष्याः कटाक्षैरपाङ्गैर्मे मम अशरणमसहायं हृदयम् अपहृतम् अपविद्धं परिक्षिप्तं पीतम् उन्मूलितञ्च क्षतीन्मूलनमेव जातम् ।

यान्त्या मुहुर्वलितकन्धरमाननं तत्
आवृत्तवृन्तशतपत्रनिभं वहन्त्या।
दिग्धोऽमृतेन च, विषेण च, पक्ष्मलाक्ष्या,
गाढं निखात इव मे हृदये कटाक्षः॥ (४१)

ततः प्रभृति
परिच्छेदातीतः सकलवचनानामविषयः,
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान्।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापञ्च कुरुते॥ (४२)

अपि च। परिच्छेदव्यक्तिर्भवति न पुरःस्थेऽपि विषये,
भवत्यभ्यस्तेऽपि स्मरणमतथाभावविरसम्।
न सन्तापच्छेदो हिमसरसि वा चन्द्रमसि वा
मनो निष्ठाशून्यं भ्रमति, च किमप्यालिखति च॥(४३)

---

(४१) यान्त्येति। मुहुर्वारं वारं वलितकन्धरं वक्रितग्रीवं यथा स्यात् तथा पश्चाद्वर्त्तिनं मां द्रष्टुमित्यर्थः। यान्त्या गच्छन्त्या आवृत्तवृन्तशतपत्रनिभम् आवर्जितनालकमलसदृशं तत् सुन्दरम् आननं मुखं वहन्त्या पक्ष्मलाक्ष्या कत्रा मुनेवया अमृतेन दिग्धः लिप्तस्तथा विषेण च दिग्धो लिप्तः कटाक्षः मे मम हृदये गाढं निखात इव प्रोथित इव।

(४२) परिच्छेदेति। परिच्छेदातीतः इयत्तारहितः इयत्तया वक्तुमशक्य इत्यर्थः। सकलवचनाना मविषयः सकलवाक्पथातीत इत्यर्थः। तथा पुनर्जन्मनि परलोके अस्मिन् इह च काले यः अनुभवपथम् अनुभवज्ञानविषयत्वं न गतवान् इह परत्र च अनुभवितुमशक्य इत्यर्थः। विवेकस्य विवेचनायाः प्रध्वंसात् क्षयात् उपचितमहामोहः, वर्द्धितमोहान्धकारः, अतएव गहनः भीषणः, तस्य च, विवेकनाशकत्वेन तथात्व मुत्प्रेक्षितमित्यर्थः। कोऽपि अनिर्वचनीयः विकारः विरहजन्यवैकृतम् अन्त रन्तःकरणं जड़यति मोहयति, तापं कुरुते तापयति च। एतेन विरहस्यासह्यत्वमुक्तम्।

(४३) परिच्छेदेति। पुरःस्थेऽपि समीपवर्त्तिन्यपि विषये घटपटादौ

कल। दिढं क्खु एसो कण्वि अवहरिदो, अवि णाम मालदी जेव्व सा भवे ? (ड)

मक। [स्वगतम्]। अहो ! अभिष्वङ्गः, तत्किं निषेधयामि सुहृदम्।

अथवा। माभूसुहृत् खलु भवन्तमनन्यजन्मा,
मा ते मलीमसविकारघना मतिर्भूत्।
इत्यादि नन्विह निरर्थकमेव यस्मात्
कामश्च जृम्भितगुणो, नवयौवनञ्च ॥ (४४)

---

(ड) दृढं खल्वेष कयाऽप्यहृतः, अपि नाम मालत्येव सा भवेत् ?।

---

परिच्छेदव्यक्तिः इयत्तास्फुरणम् अयमेव घट इत्यादिकं न भवति। अभ्यस्तेऽपि पुनः पुनरावृत्तेऽपि अतथाभावविरसम् अतथाभावेन अयथार्थत्वेन विरसं वैरस्यवत् स्मरणं भवति। विषयान्तरं स्मर्त्तुमुद्युञ्जानोऽपि स्मृतिपथात् स्खलितोऽस्मीति भावः। सन्तापच्छेदी विरहव्यथाचयः हिमसरसि शीतलसरोवरे न चन्द्रमसि वा हिमांशौ वा न भवतीत्यर्थः। विशेषणद्वयस्य तादृक् सम्भावनायामपि तदकरणात् विरहजन्यसन्तापस्यातिशय्यं वर्त्तते। तथा मनः कर्तृ निष्ठाशून्यं धैर्यरहितं सत् भ्रमति चञ्चला भवतीत्यर्थः। किमपि आकाशकुसुमवत् वस्तु आलिखति रचयति च। एतेन मनसः सङ्कल्पाख्यावस्था उक्ता।

(४४) मेति। अनन्यजन्मा न अन्यस्मात् जन्म यस्य स कन्दर्पः भवन्तं मा सूसुहत् खलु। मा शब्दयोगे अनुज्ञार्थे लुङ्। ते तव मतिः मलीमसविकारघना मालिन्यनिविड़ा माभूत् न भवतु पूर्ववत् लुङ्। ननु भोः ! माधव इत्यर्थः। इत्यादि पूर्वोक्तं निषेधवाक्यम् इह त्वयि निरर्थकमेव। यस्मात् यतो हेतोः कामश्च जृम्भितगुणः प्रकटितसामर्थ्यः तवेति शेषः। नवयौवनञ्च जृम्भितगुणं लिङ्गविपरिणामेनान्वयः। पक्षे कामः जृम्भितगुणः आततज्यधनुर्वाणः, नवयौवनं जृम्भितगुणं प्रकाशितस्वधर्मम्। कामोद्रेके यूनामङ्गसौष्ठवादिकं भवतीति प्रसिद्धम्।

[प्रकाशम्।] अपि वयस्येन विदिते तदन्वयनामनी ?

माध। सखे! श्रूयतां, अथ तस्याः करेणुकारोहणसमय एव महतः सखीकदम्बकादन्यतमा वारयोपित् विलम्ब्य, बालवकुलकुसुमावचयक्रमेण नेदीयसी भूत्वा, प्रणम्य, कुसुमापीडव्याजेन मामिवमुक्तवती, महाभाग! सुश्लिष्टगुणतया रमणीय एष वः सुमनसां सन्निवेशः, कुतूहलिनी च नो भर्त्तृदारिका वर्त्तते, तस्यामभिनवो विचित्रः कुसुमेषुव्यापारस्तद्भवतु कृतार्थता वैदग्ध्यस्य, फलतु निर्माणरमणीयता, विधातुः आसादयतु सरस एष भर्तृदारिकायां कण्ठावलम्बनमहार्घ्यतामिति।

मकरन्दः। अहो! वैदग्ध्यम्।

माध। तया च मदनुयुक्तया समाख्यातमियममात्यभूरिवसोः प्रसूतिर्मालती नाम, अहञ्च प्रसादभूमिर्भर्त्तृदारिकायाः धात्रेयिका लवङ्गिका नामेति।

कल। [सहर्षम्।] किं णाम मालदीत्ति? दिट्टिआ विलसिदं क्खु भअवदा देवेण कुसुमाउहेण, ता जिदं अह्मेहिम् (त)

मक। अमात्यभूरिवसोरात्मजेत्यपर्य्याप्तिर्बहुमानस्य।

अपि च। मालती मालतीति मोदते भगवती कामन्दकी, ताञ्च किल राजा नन्दनाय प्रार्थयते इति किंवदन्ती श्रूयते।

माध। तया चाहमभ्यर्थमानस्तां वकुलमालामात्मनः

---

(त) किं नाम मालतीति? दिष्ट्या विलसितं खलु भगवता देवेन कुसुमायुधेन, तज्जितमस्माभिः।

कण्ठादवतार्य्य दत्तवान् असौ पुनरभिनिविष्टया दृशा मालतीमुखावलोकनविहस्ततया * विषमविरचितैकभागान्तामिव बहुमन्यमानां महानयं प्रसाद इति व्याहृत्य गृहीतवती, अनन्तरञ्च यात्राभङ्गप्रचलितस्य महतः पौरजनस्य सङ्कुलेन विघटितायां तस्यामागतोऽस्मि ।

मक । वयस्य ! मालत्या अपि स्नेहदर्शनात्सुश्लिष्टमेतत्, योऽपि हि कपोलपाण्डुतादिचिह्नसूचितः प्राक् प्रवृद्धस्तस्याः कामाभिष्वङ्गः, सोऽपि त्वन्निबन्धन इत्यभिव्यक्तमेवैतत्, एतत्तु न ज्ञायते, क्व दृष्टपूर्वस्तया वयस्य इति, न खलु तादृश्यो महाभागधेयाः कुमार्य्योऽन्यत्रासक्तमनसो भूत्वा अन्यत्र चक्षूरागिण्यो भवन्ति । अपिच ।

अन्योन्यसम्भिन्नदृशां सखीनाम् तस्यास्त्वयि प्रागनुरागलिङ्गम् ।
कस्यापि कोऽपीति निवेदितञ्च धात्रेयिकायाश्चतुरं वचश्च ॥ (४५)

कल । [ उपसृत्य । ] एदं चित्तफलअं ।

इति चित्रफलकं दर्शयति । उभौ पश्यतः ।

मक । कलहंसक ! केनैतन्माधवस्य प्रतिविम्बमभिलिखितम् ?

---

* विहस्ततया व्याकुलतया ।

( ४५ ) अन्योन्येति । हे वयस्य ! अन्योन्यसम्भिन्नदृशां अन्योन्यं सम्भिन्ने उन्मीषिते दृशौ यासां परस्परदरविकसिताक्षीणां सखीनां मालतीसहचरीणां तस्याः मालत्याश्च प्राक् प्रथमम् अनुरागलिङ्गं सौहार्दचिह्नं कस्यापि जनस्य कोऽप्यनुरागैकहेतुश्च इति धात्रेयिकायाश्चतुरं सुरसं श्लिष्टमिति यावत् वचश्च त्वयि निवेदितम् विज्ञापितम् । अत्रानुरागधात्रीश्लिष्टवाक्ययोः परस्परवाक्यार्थहेतुकत्वात् काव्यलिङ्गम् अलङ्कारः ।

कल । जेण जेव्व से हिअअं अवहरिदम् (थ) ।

मक । अपि मालत्या ?

कल । अधइं ।

माध । वयस्य मकरन्द ! प्रसन्नप्रायस्ते वितर्कः ।

मक । कलहंसक ! कुतोऽस्याधिगमः ?

कल । मए दाव मन्दारिआए हत्थादो, तएवि लवङ्गिआसआसादो (द) ।

मक । अथ किमाह मन्दारिका माधवालेख्यप्रयोजनं मालत्याः ?

कल । उक्कण्ठाविणोदोत्ति (ध)

मक । वयस्य माधव ! सर्वथा समाश्वसिहि ।

या कौमुदी नयनयोर्भवतः सुजन्मा,
तस्या भवानपि मनोरथबन्धबन्धुः ।
तत्सङ्गमं प्रति सखे ! न हि संशयोऽस्ति,
यस्मिन् विधिश्च मदनश्च कृताभियोगः ॥ (४६)

---

(थ) येनैवास्य हृदयमपहृतम् ।
(द) मया तावन्मन्दारिकाया हस्तात्तयापि लवङ्गिकासकाशात् ।
(ध) उत्कण्ठाविनोद इति ।

---

(४६) येति । सुकुमाराकारा भवती नयनयोर्नेत्रयोः कौमुदी तद्वदाह्लादजनिका या भवतीत्यर्थः । तस्याः मालत्याः सुजन्मा शोभनजन्मा भवानपि मनोरथबन्धबन्धुः अभिलाषनिबन्धनाय प्रियः नयनकौमुदीस्वरूप इत्यर्थः । हे सखे ! माधव ! तत्सङ्गमं प्रति मालतीमिलनं प्रति नहि संशयः सन्देहोऽस्ति । उभयोराकारेङ्गितादिभिर्मनोहारस्य उद्घाटितत्वादितिभावः । यस्मिन् सङ्गमे विधिः स्रष्टा च मदनः कामश्च कृताभियोगः कृतपरिश्रमः भवतीत्यर्थः । विधिमदनावेव उभयोर्मेलनं घटयिष्यत इत्यर्थः ।

द्रष्टव्यस्वरूपा च भवतो विकारहेतुः तदत्रैव लिख्यतां मालती।

माध। यदभिरुचितं वयस्याय, तदुपनय चित्रफलकं चित्रवर्त्तिकाञ्च। [मकरन्द उपनयति]।

माध। [लिखन्]। सखे मकरन्द !

वारंवारं तिरयति दृशोरुद्गमं वाष्पपूर-
स्तत्सङ्कल्पोपहितजडिम स्तम्भ मभ्येति गात्रम्।
सद्यः स्विद्यन्नयमविरतोत्कम्पलोलाङ्गुलीकः,
पाणिर्लेखाविधिषु नितरां वर्त्तते, किङ्करोमि॥ (४७)

तथापि व्यवसितोऽस्मि। [चिरादभिलिख्य प्रदर्शयति]।

मक। [विलोक्य]। उपपन्नस्तावदत्र भवतोऽभिष्वङ्गः। [सकौतुकम्]। कथमचिरेणैव निर्माय लिखितः श्लोकः। [वाचयति]।

---

(४७) वारंवारमिति। वाष्पपूरः अश्रुप्रवाहः वारंवारं अभीक्ष्णं आभीक्ष्ण्ये द्विरुक्तिः। दृशोर्नयनयोः उद्गमं प्रचारं तिरयति आच्छादयति। तिरस्करोतीति ण्यन्तात् टिलोपे सिद्धम्। तत्सङ्कल्पोपहितजड़िम तस्या मालत्याः सङ्कल्पेन निरन्तरध्यानेन उपहितः जनितः जड़िमा कार्य्याचमत्वरूपः यस्य तत् गात्रं देहः कर्त्तृ स्तम्भं अचलवदचलत्वं अभ्येति प्राप्नोति तथा सद्यस्तत्क्षणात् स्विद्यन् स्वेदाञ्चितः अविरतोत्कम्पलोलाङ्गुलीकः अविरतमुत्कम्पो यस्य स, अतएव लोलाङ्गुलीकः लोलाश्चञ्चला अङ्गुलयो यस्य स बहुव्रीहौ कप्। ततः समानाधिकरणसमासः। अयं ममेत्यर्थः पाणिः करः लेखाविधिषु चित्रव्यापारेषु नितरामतिशयेन तिङव्ययेत्यादिनाम् प्रत्ययः। वर्त्तते तिष्ठति किन्तु न लिखति किं करोमि उपायान्तराभावात् कार्य्याचमत्वं जायते। अत्र माधवस्य कम्पस्वेदरूपा सात्त्विकी अवस्था व्यक्ता।

जगति जयिनस्ते ते भावा नवेन्दुकलादयः,
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये।
मम तु यदियं याता लोके विलोचनचन्द्रिका,
नयनविषयं जन्मन्येकः स एव महोत्सवः॥ (४८)

[प्रविश्य सत्वरं मन्दारिका]। कलहंसअ! पदाणुसारेण उअलद्धोसि। [माधवमकरन्दौ दृष्ट्वा सलज्जम्]। कधं, तेवि महाणुभावा इधजेव्व? (न)।

[उपसृत्य प्रणमति।]

उभौ। मन्दारिके! इहास्यताम्।

मन्दा। [उपविश्य।] कलहंसअ! उवणेहि मे चित्तफलअं।

कल। [गृहीत्वा।] गेह्ण एदम्।

---

(न) कलहंसक! पदानुसारेण उपलब्धोऽसि। कथं तावपि महानुभावौ अत्रैव?

---

(४८) जगतीति। जयिनः उत्कृष्टाः प्रकृतिमधुराः स्वभावसुन्दरास्ते ते प्रसिद्धाः नवेन्दुकलादयः बालसुधांशुकौमुदीप्रभृतयः भावाः पदार्थाः अन्ये तद्भिन्नाश्च जगति सन्ति, ये भावा मनो हृदयं मदयन्ति आह्लादयन्ति। चन्द्रादीनामाह्लादजनकत्वे कथं मालत्यां तवानुराग इत्याशङ्क्याह ममेति। किन्तु लोके भुवने इयं विलोचनचन्द्रिका नेत्रकौमुदी यत् मम नयनविषयं दृग्गोचरत्वं याता प्राप्ता जन्मनि समेत्यर्थः। एकः अद्वितीयः स एव तद्दर्शनरूप इत्यर्थः महोत्सवः भवतीति शेषः। चन्द्रादीनां सत्यप्याह्लादजनकत्वे तदपेक्षया मालत्याः सर्वातिशायित्वं मुक्तम्। चन्द्रादीनान्तु हीनत्वं मुक्तं तेन मालती एव एका जीवनादपि धनादपि गुर्वीति भावः।

मन्दा। [विलोक्य]। कलहंसअ! केण उण, किंणिमित्तं वा, एत्थ मालदी आलिहिदा ?। (प)

कल। जो जेण णिमित्तेण मालदीए (फ)।

मन्दा। [सहर्षं]। दिट्ठिआ दंसिदफलं दाणिं विसाणं पआवइणो (ब)।

मक। मन्दारिके! यदत्र वस्तुनि एष ते वल्लभः कथयति, अपि तथा तत् ?

मन्दा। महाभाअ! अधइम्।

मक। क्व पुनर्मालती माधवं प्राग् दृष्टवती ?

मन्दा। लवङ्गिआ भणादि, वादाअणगदेत्ति।

मक। वयस्य! ननु अमात्यभवनासन्नरथ्ययैव बहुशः सञ्चरावहे, तदुपपन्नमेतत्।

मन्दा। अणुमण्णन्तु मं महाणुभाआ, जाव एदं भअवदो देवस्स मअणस्स सुचरिदं पिअसहीए लवङ्गिआए णिवेदेमि (भ)

मक। प्राप्तावसरमेतद्भवत्याः।

[ मन्दारिका चित्रफलकं गृहीत्वा निष्क्रान्ता ]।

मक। वयस्य! खरतरकिरणोऽयं भगवान् सहस्रदीधितिः अलङ्करोति मध्यमह्नः, तदेहि संस्त्यायमेव * गच्छावः।

[इत्युत्थाय परिक्रामतः]।

---

(प) कलहंसक! केन पुनः किं निमित्तं वा अत्र मालती आलिखिता।

(फ) यः येन निमित्तेन मालत्या।

(ब) दिष्ट्या दर्शितफलमिदानीं विज्ञानं प्रजापतेः। विज्ञानं शिल्पनिर्माणकौशलम्।

(भ) अनुमन्येतां मां महानुभावौ, यावदिदं भगवतो देवस्य मदनस्य सुचरितं प्रियसख्या लवङ्गिकाया निवेदयामि।

* संस्त्यायं गृहम्।

माध । एवं ह्वि मन्ये ।

घर्माम्भोविसरविवर्त्तनै रिदानीम्
मुग्धाच्या: परिजनवारसुन्दरीणाम् ।
तत्प्रातर्विहितविचित्रपत्रलेखा-
वैदग्ध्यं जहति कपोलकुङ्कुमानि ॥ (४९)

अपि च । उन्मीलन्मुकुलकरालकुन्दकोश-
प्रश्चयोतद्घनमकरन्दगन्धबन्धो ! ।
तामीषत्प्रचलविलोचनां नताङ्गी-
मालिङ्गन् पवन ! मम स्पृशाङ्गमङ्गम् ॥ (५०)

मक । अभिहन्ति, हन्त कथमेष माधवम्
सुकुमारकायमनवग्रहः स्मरः ।

---

( ४९ ) घर्मेति । इदानीं मध्याह्ने । घर्माम्भोविसरविवर्त्तनैः घर्माम्भसां स्वेदजलानां विसरः धारा तस्य विवर्त्तनैस्तिर्य्यक्प्रसारणैः मुग्धाच्यास्तन्वङ्ग्याः परिजनवारसुन्दरीणां परिजनगणिकानां कपोलकुङ्कुमानि गण्डस्थलकुङ्कुमानु-लेपनानि (कर्तृपदं) तत् प्रसिद्धं प्रातः प्रभातसमये विहितविचित्रपत्रलेखावैदग्ध्यं रचितरुचिरपत्राकारकपोलभूषणसौन्दर्य्यं जहति त्यजन्ति । प्रातःकालापेचयापि मध्याह्ने स्वकपोलकुङ्कुमानां स्थानभ्रष्टत्वेनाधिकमुत्प्रेचितम् । प्रातर्वेश्यादीनां यथास्थानभूषणकुङ्कुमादिलेपनं मध्याह्ने च सुकुमारतया तस्य निःसहत्वम् वर्णितम् ।

( ५० ) उन्मीलदिति । उन्मीलन्ति ईषद्विकसितानि मुकुलानि यस्य स करालो भीषणः कुन्दकोशः, विरहात् सवन्मधुकत्वाच्च भीषणत्वमित्यर्थः । तस्मात् प्रश्चयोतन् गलन् यो घनः निविड़ः मकरन्दः कुसुमरसः तस्य यो गन्धः परिमलः तस्य बन्धुः सहचरः तत् सम्बुद्धिः । हे तादृश ! पवन ! वायो ! ईषत्प्रचलविलो-चनां दरविकम्पितदृष्टिं विरहकाले पवनस्य भीषणव्यापारवत्तया समन्ततश्चलित-लोचनां नताङ्गीं तां मालतीं आलिङ्गन् श्लिष्यन् मम अङ्गमङ्गं प्रत्यवयवं स्पृश, मालती गात्रालिङ्गनजन्यसौभाग्यातिशयेन पवनस्य मद्देहस्पर्शेऽपि तादृशसौरभ्य-लाभप्रसङ्गादितिभावः ।

अचिरेण वैकृतविवर्त्तदारुणः,
कलभं कठोर इव कूटपाकलः ॥ (५१)

तदत्र भगवती कामन्दकी नः शरणम् ॥

माध। [स्वगतम्।] आश्चर्य्यम्!

पश्यामि तामित इतः पुरतश्च पश्चात्
अन्तर्बहिः परित एव विवर्त्तमानाम्।
उद्‌बुद्धमुग्धकनकाब्जनिभं वहन्ती-
मासक्तितिर्य्यगपवर्त्तितदृष्टि वक्त्रम् ॥ (५२)

[प्रकाशं।] वयस्य! मम हि सम्प्रति,

प्रसरति परिमाथी कोऽप्ययं देहदाह-
स्तिरयति करणानां ग्राहकत्वं प्रमोहः।
रणरणकविवृद्धिं बिभ्रदावर्त्ति गात्रम्,
ज्वलति हृदयमन्तस्तन्मयत्वञ्च धत्ते ॥ (५३)

इति निष्क्रान्ताः सर्वे।

इति वकुलवीथी नाम प्रथमोऽङ्कः।

---

(५१) अभिहन्तीति। अनवग्रहः प्रतिबन्धशून्य एषः स्मरः कामः सुकुमारकायं सुकोमलाङ्गं माधवं वैकृतविवर्त्तदारुणः विकारान्यथाभावकठिनः कठोरः चिकित्साऽसाध्यः कूटपाकलः करिवातज्वरः कलभं करिशावकमिव अचिरेण झटिति कथमभिहन्ति प्रहरति व्यथयतीत्यर्थः। हन्तीति खेदे स इव स इति निदर्शना साच दुर्जयस्मरकर्त्तृकप्रहाररूपकेण सङ्कीर्य्यते इत्यनयोः सङ्करः।

(५२) पश्यामीति। उद्‌बुद्धमुग्धकनकाब्जनिभं उद्‌बुद्धं विकसितं मुग्धं कान्तं यत् सुवर्णपद्मं तन्निभं तत्सदृशं आसक्तितिर्य्यगपवर्त्तितदृष्टि आसक्त्या मयि अनुरक्तया तिर्य्यगपवर्त्तिता तिर्य्यक्‌वलिता दृष्टिर्यत्र तत् वक्त्रं मुखं वहन्तीं, तथा अन्तर्बहिः अभ्यन्तरेवाह्येऽपि च परितश्चतुर्दिक्षु विवर्त्तमानां नानारूपधारिणीं तामिव मालतीमेव इतः इतः पुरतश्च पश्यामि अवलोकयामि।

(५३) प्रसरतीति। परिमाथी पीड़कः कोऽप्यनिर्वचनीयोऽयं देहदाहः

# द्वितीयोऽङ्कः।

—:०—

ततः प्रविशतश्चेट्यौ।

एका। हला! सङ्गीदसालापरिसरे अवलोइदादुदीआ तुमं किं मन्तअन्ती आसि? (क)

द्वितीया। सहि! तेण किल माहवप्पिअवअस्सेण मअरन्देण सअलोज्जेव्व मअणुज्जाणवुत्तन्तो भअवदीए णिवेदिदो (ख)।

प्रथमा। तदो किं?

द्विती। तदो भट्टिदारिअं दट्टुकामाए भअवदीए प्पउत्तिणिमित्तं अवलोइदा अणुप्पेसिदा। मएवि ताए कधिदं, जधा लवङ्गिआदुदीआ विवित्ते भट्टिदारिआ वट्टदित्ति (ग)।

---

(क) हला! सङ्गीतशालापरिसरे अवलोकिताद्वितीया त्वं किं मन्त्रयन्ती आसीः।

(ख) सखि! तेन किल माधवप्रियवयस्येन मकरन्देन सकल एव मदनोद्यानवृत्तान्तो भगवत्यै निवेदितः।

(ग) ततो, भर्तृदारिकां द्रष्टुकामया भगवत्या प्रवृत्तिनिमित्तं अवलोकिता अनुप्रेषिता, मयापि तस्यै कथितं, यथा लवङ्गिकाद्वितीया विविक्ते भर्तृदारिका वर्त्तते।

---

शरीरसन्तापः प्रसरति समन्ताद्वर्त्तते। प्रमोहः अज्ञानं करणानामिन्द्रियाणां ग्राहकत्वम् अवलम्बकत्वं तिरयति आच्छादयति। आवर्त्ति विवर्त्तमानं गात्रं रणरणकविद्धिं शब्दभूयस्त्वं बिभ्रत् दधानं अथवा रणरणकविद्धिं कामविद्धिं बिभ्रत् ज्वलति, अन्तर्हृदयं अन्तःकरणं तन्मयत्वं मालतीस्वारूप्यं धत्ते आश्रयते। अत्र तापमोहमालिन्यतन्मयतारूपा स्मरावस्था उक्ता।

प्रथ। हला! लवङ्गिआ क्खु केसरकुसुमाइं अवचिणोमित्ति, मअणुज्जाणादो जेव्व णागदा ता किं सम्पदं सम्पत्ता? (घ)

द्विती। अधइं, तं क्खु परावडन्तीं जेव्व हत्थे गेह्निअ, पडिसिद्धपरिअणा, भट्टिदारिआ उअरिअलिन्दअं समारूढा (ङ)।

प्रथ। णूणं तस्स महाणुभावस्स सङ्कधाए अत्ताणं विणोदेदि (च)।

द्विती। [ निश्वस्य। ] कुदो से आसासो! एदिणा अज्ज सविसेसदंसणेण अदिभूमिं क्खु ताए अहिणिवेसो गमिस्सदि। अण्णञ्च, णन्दणस्स कारणादो महाराओ भट्टिदारिअं पत्थयन्तो अमच्चेण विण्णत्तो (छ)।

प्रथ। किंत्ति?

द्विती। पहवदि णिअस्स कण्णआजणस्स महाराओत्ति'। ता जादं आमरणं क्खु हिअअसल्लं मालदीए माहवाणुराओत्ति तक्केमि (ज)।

---

(घ) हला! लवङ्गिका खलु केशरकुसुमान्यवचिनोमीति, मदनोद्यानादेव नागता तत् किं साम्प्रतं संप्राप्ता।

(ङ) अथ किं, तां खलु परापतन्तीमेव हस्ते गृहीत्वा, प्रतिषिद्धपरिजना, भर्तृदारिका उपर्य्यलिन्दं समारूढा।

(च) नूनं तस्य महानुभावस्य संकथया आत्मानं विनोदयति।

(छ) कुतस्तस्या आश्वासः। एतेनाद्य सविशेषदर्शनेनातिभूमिं खलु तस्या अभिनिवेशो गमिष्यति। अन्यच्च, नन्दनस्य कारणान्महाराजो भर्तृदारिकां प्रार्थयमानोऽमात्येन विज्ञप्तः। अतिभूमिं उत्कर्षम्। अभिनिवेश आसक्तिः।

(ज) प्रभवति निजस्य कन्यकाजनस्य महाराज इति! तज्जातमामरणं खलु हृदयशल्यं मालत्या माधवानुराग इति तर्कयामि।

प्रथ । अवि णाम, भअवदी किंपि एत्थ भअवदीत्तणं दंसइस्सदि । (झ)

द्विती । अइ असम्बद्धमणोरहे ! एहि, गच्छह्म । (ञ)

[ इति परिक्रम्य निष्क्रान्ते प्रवेशकः । ] (ट)

[ततः प्रविशत्युपविष्टा सोत्कण्ठा मालती लवङ्गिका च । ]

मालती । हुं सहि ! तदो, तदो ।

लवङ्गिका । तदो तेण महाणुभाएण उवणीदा मे इअं वउलमाला (ठ) । [ इति मालामर्पयति ] ।

माल । [गृहीत्वा, सहर्षं निर्वर्ण्य । ] सहि ! एक्क-पास-विसम-पडिवद्धा क्खु इअं विरअणा (ड) ।

लव । एत्थ दाव अरमणीअत्तणे तुमं ज्जेव अवरज्झसि (ढ)

माल । कधं विअ ?

लव । जेण सो मुद्धो दुब्बा-सामलङ्गो तधा विहत्थीकिदो (ण) ।

माल । पिअसहि लवङ्गिए ! सव्वधा आसासणसीलासि (त) ।

---

(झ) अपि नाम भगवती किमप्यत्र भगवतीत्वं दर्शयिष्यति । भगवतीत्वं ज्ञानादिवैभवम् ।

(ञ) अयि असम्बद्धमनोरथे ! एहि गच्छाव ।

(ट) प्रवेशकोऽनुदात्तोक्त्या नीचापात्रप्रयोजितः । अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ।

(ठ) ततस्तेन महानुभावेनोपनीता मे एषा वकुलमाला ।

(ड) सखि ! एकपार्श्वविषमप्रतिबद्धा खल्वियं विरचना । प्रतिबद्धा घटिता ।

(ढ) अत्र तावदरमणीयत्वे त्वमेवापराध्यसि ।

(ण) येन स मुग्धदूर्वाश्यामलाङ्गस्तथा विहस्तीकृतः । विहस्तो व्याकुलः ।

(त) प्रियसखि लवङ्गिके । सर्वथा आश्वासनशीलासि ।

लव। सहि! का एत्थ आसासणसीलदा? णं भणामि, सोवि पिअसहीए मन्द-मारुदउव्वेल्लन्त-प्पफुल्ल-पुण्डरीअ-विब्भमेहिं पढ़माबद्ध-वउलावली-विरअणावदेस-संजमिद-वलामोडि-वित्थरन्तेहिं लोअणेहिं, विजिम्भमाण-विम्हअ-त्थिमिद-दीह-पेरन्त-परि-अत्तणा-विलास-तण्डविद-भ्रूलदा-विडम्बिदाणङ्ग-सारङ्ग-विब्भम-विअड्ढं अवलोअअन्तो पच्चक्खीकिदोज्जेव्व (थ)।

माल। [लवङ्गिकां परिष्वज्य]। अम्मो पिअसहि! किं तस्स दाव महाणुभाअस्स साहाविआ ज्जेव्व मुहुत्तसण्णिधाइणो जणस्स विप्पलम्भहेतुआ विलासा, आदु जहा पिअसही संभावेदि? (द)

लव। [विहस्य सासूयमिव]। तुमम्वि सहावेण ज्जेव्व तस्सिं अवसरे असङ्गीदअं णच्चिदासि (ध)।

---

(थ) सखि! काव आश्वासनशीलता? ननु भणामि, सोऽपि प्रियसख्या मन्दमारुतोद्वेल्लत्प्रफुल्लपुण्डरीकविभ्रमाभ्यां प्रथमावद्धबकुलावलीविरचनापदेशसंयमितवलामोडिविसृताभ्यां लोचनाभ्यां विजृम्भमाणविस्मयस्तिमितदीर्घपर्य्यन्तपरिवर्त्तनाविलासताण्डवितभ्रूलताविडम्बितानङ्गशारङ्गविभ्रमविदग्धम् अवलोकयन् प्रत्यक्षीकृत एव। उद्वेल्लत् कम्पमानम्। विभ्रमं सादृश्यं भ्रान्तिर्वा। माधवस्य पुण्डरीकलोचनत्वात्। बलामोड्या बलात्कारेण विसृताभ्यां विस्तारं गच्छन्त्याम्। विजृम्भमाणः वर्द्धमानः। स्तिमितः स्निग्धः। दीर्घपर्य्यन्तम् अतिदीर्घम्। परिवर्त्तना पुनः पुनर्गमनं तत्र विलासः विशिष्टदृष्टिव्यापारः तेन ताण्डवितया नार्त्तितया भ्रूलतया विडम्बितः समीकृतः अनङ्गशारङ्गविभ्रमः कन्दर्पधनुर्विलासः ततः विदग्धम् इति क्रियाविशेषणम्।

(द) अहो प्रियसखि! किं तस्य तावन्महानुभावस्य स्वाभाविक एव मुहूर्त्तसन्निधायिनो जनस्य विप्रलम्भहेतुका विलासाः, आहोस्वित् यथा प्रियसखी सम्भावयति?

(ध) त्वमपि स्वभावेनैव तस्मिन्नवसरेऽसङ्गीतकं नर्त्तितासि।

माल। [सलज्जं]। हुं, तदो, तदो।

लव। तदो पडिणिअत्तमाण-जत्ताजण-सङ्कुलेण अन्तरिदे तस्सिं जणे, मन्दारिआए घरं उपगदह्मि, ताए क्खु चित्तफलअं पभादे हत्थीकिदं आसि (न)।

माल। किंणिमित्तं ?

लव। तं क्खु माहवाणुचरो, कलहंसओ णाम कामेदि, सा तस्स दंसइस्सदित्ति, तदो पिअणिवेदिआ मे मन्दारिआ सम्वुत्ता (प)।

माल। [स्वगतं]। णूणं तेणावि कलहंसएण तं पडिच्छन्दअं अत्तणो णाहस्स दंसिदं हुविस्सदि। [प्रकाशं]। सहि ! किंदाणिं दे पिअं (फ)।

लव। एदं, क्खु, सन्दाविदस्स सन्दावआरिणो दुल्लह-मणोरहावेस-दूसहाआस-दज्झन्त-चित्तस्स खणमेत्त-णिव्वावअं तुह पडिच्छन्दअं (ब)। [इति चित्रं दर्शयति]।

माल। [सहर्षं सोत्कम्पं चित्रं निर्वर्ण्य]। अहो ! दाणिं

---

(न) ततः प्रतिनिवर्त्तमानयात्राजनसङ्कुलेन अन्तरिते तस्मिन् जने, मन्दारिकाया गृहमुपगतास्मि, तस्याः खलु चित्रफलकं प्रभाते हस्तीकृतमासीत्। हस्तीकृतं न्यासीकृतमित्यर्थः।

(प) तां खलु माधवानुचरः कलहंसकी नाम कामयते, सा तस्य दर्शयिष्यतीति, ततो मे प्रियनिवेदिका मन्दारिका संवृत्ता।

(फ) नूनं तेनापि कलहंसकेन तत्प्रतिच्छन्दकमात्मनो नाथस्य दर्शितं भविष्यति। सखि ! किमिदानीं ते प्रियम्।

(ब) एतत्, खलु सन्तापितस्य सन्तापकारिणो दुर्लभमनोरथावेशदुःसहायासदह्यमानचित्तस्य चणमात्रनिर्वापकं तव प्रतिच्छन्दकम्।

पि मे हिअअस्स अणासङ्गो, जेण एव्वंपि आस्सासणं विप्पलम्भोत्ति संभावेमि। कधं अक्खराइम्पि ? (भ)।

[ इति वाचयति । ]

जगति जयिनस्ते ते भावा नवेन्दुकलादयः [इत्यादि पूर्वोक्तं पठित्वा सानन्दं]। महाभाअ ! सरिसी क्खु दे णिम्माणस्स विरअणामधुरदा, दंसणं उण तक्कालमणोहरं परिणामदीहसन्दावदारुणम्। धम्माओ क्खु ताओ कसम्भाओ जाओ तुमं ण पेक्खन्ति, पेक्खिअ वा अत्तणो हिअअस्स पहवन्ति।

[ इति रोदिति । ] (म)

लव। सहि ! किं एव्वंपि दे णत्थि आस्सासो ? (य)।

माल। सहि ! कधं ?

लव। जस्स कारणादो, उक्खण्डिअबन्धणं विअ, कङ्केल्लिपल्लवं, किलम्मन्त-णोमालिआ-कुसुम-णिस्सहा परिक्खिज्जसि, सोवि जाणाविदो भअवदा मम्महेण सन्दावस्स, दूसहत्तणं त्ति (र)।

---

(भ) अहो ! इदानीमपि मे हृदयस्य अनासङ्गो, येनैवमपि आश्वासनं विप्रलम्भ इति सम्भावयामि। कथमक्षराणि अपि ? ।

(म) महाभाग ! सदृशी खलु ते निर्माणस्य विरचनामधुरता, दर्शनं पुनस्तत्कालमनोहरं परिणामदीर्घसन्तापदारुणम्। धन्याः खलु ताः कन्यका यास्त्वां न प्रेक्षन्ते प्रेक्ष्य वा आत्मनो हृदयस्य प्रभवन्ति।

(य) सखि ! किमेवमपि ते नास्ति आश्वासः ?

(र) यस्य कारणादुत्खण्डितबन्धनमिव कङ्केल्लिपल्लवं क्लाम्यन्नवमालिका-कुसुमनिःसहा परिखिद्यसे, सोऽपि ज्ञापितो भगवता मन्मथेन सन्तापस्य दुःसहत्वमिति। उत्खण्डितम् छिन्नम्। कङ्केलिः अशोकः। निःसहा अक्षमा।

माल। कुसलं दाणिं तस्स महाणुभावस्स भोदु, मम उण दुल्लहो आस्सासो। [सास्रं]। विसेसदो अज्ज पिअसहि! (ल)।

[संस्कृतमाश्रित्य।]

(१) मनोरागस्तीव्रं विषमिव विसर्पत्यविरतम्,
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति, न चाम्बा, न भवती॥

लव। एवं ज्जेव्व, पच्चक्खसोक्खदाइणो परोक्ख-दुक्ख-दूस्सहाआस-कारिणो सज्जणसमागमा होन्ति। अवि अ, जस्स बादाअणन्तर-मुहुत्त-मेत्त-दंसणेण, सविसेस-समिद्ध-हुद-वहाअन्त-पुस्सिमा-चन्दोदआ, णिक्करुण-काम व्वाबार-संसइद-जीबिदा दे सरीराबत्था, तस्स ज्जेव्व संपत्तसबिसेसदंसणा अज्ज सन्तप्पसि त्ति किं एत्थ भणिदव्वं। ता, पिअसखि! सलाह-

---

(ल) कुशलमिदानीं तस्य महानुभावस्य भवतु, मम पुनर्दुर्लभ आयासः। विशेषतोऽद्य प्रियसखि!।

---

(१) मन इति। प्रमाथी व्यथकः मनोरागः माधवं प्रत्यभिलाषः तीव्र-मुत्कटं विषमिव अविरतं निरन्तरं विसर्पति प्रसरति। तथा विधुतः सन्धुक्षितः पावकः वह्निरिव निर्धूमं धूमरहितं यथा तथा ज्वलति, गरीयान् दुश्चिकित्स्यो ज्वर इव प्रत्यङ्गं प्रत्यवयवं हिनस्ति। इतः कारणात् इतोऽत्र तातः अम्बा माता भवती च मां त्रातुं न प्रभवति न शक्नोति।

णिज्जं दुल्लह-मणोरहफलं जीअलोअस्स, गुरुआणुराअसरिसं महाणुभाअ-वल्लह-समागमोत्ति, एत्तिअं जाणीमो (ब)।

माल। सहि! दइद-मालदी-जीविदे! साहसोवसासिणि! अवेहि। [सास्रं]। अहवा, अहंज्जेव्व वारंवारं पलोअअन्ती, दुक्खावत्थाविद-धीरत्तणा-वट्टम्भेण अत्तणो हिअएण, दूर-विजिम्भमाण दुव्विणअ-लहुई, एत्थ अवरज्झह्मि, तधावि पिअसहि! (भ)।

[भूयः संस्कृतमाश्रित्य।]

ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी,
दहतु मदनः, किं वा मृत्योः परेण विधास्यति।
मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया,
कुलममलिनं नत्वेवायं जनो, नच जीवितम्॥ (२)

---

(ब) एवमेव प्रत्यक्षसौख्यदायिनः परोक्षदुःखदुःसहायासकारिणः सज्जनसमागमा भवन्ति। अपिच यस्य वातायनान्तरमुहूर्त्तमात्रदर्शनेन सविशेषसम्बृद्धहुतवहायमानपूर्णिमाचन्द्रोदया निष्करुणकामव्यापारसंशयितजीविता ते शरीरावस्था, तस्यैव सम्प्राप्तविशेषदर्शना अद्य सन्तप्यसीति किमत्र भणितव्यम्। तत् प्रियसखि! श्लाघनीयं दुर्लभमनोरथफलं जीवलोकस्य, गुरुकानुरागसदृशं महानुभाववल्लभसमागम इत्येतावज्जानीमः। गुरुकानुरागे सखीद्वारा वल्लभसमागमः कारयितव्यः इतिभावः।

(भ) सखि! दयितमालतीजीविते! साहसोपन्यासिनि! अपेहि। अथवा, अहमेव वारंवारं प्रलोकयन्ती, दुःखावस्थापितधीरत्वावष्टम्भेन आत्मनो हृदयेन दूरविजृम्भमाणदुर्विनयलघ्वी अत्र अपराध्यामि तथापि प्रियसखि!।

---

(२) ज्वलत्विति। अखण्डकलः शशी पूर्णचन्द्रः रात्रौ रात्रौ प्रतिरात्रं वीप्सायां द्विरुक्तिः। गगने ज्वलतु, मदनो दहतु स्यातां तावत् तापदाहौ तव का मे क्षतिरस्ति इत्याशङ्क्य मरणमेव शरणमिति द्रढ़यति किं वेति। मृत्योर्मरणात् परेण मृत्योरन्यत् किं विधास्यति? करिष्यति, न किञ्चिदित्यर्थः।

लव। [ स्वगतं। ] एत्थ दाणिं को उवाओ ?

[ अथ नेपथ्यार्द्धप्रविष्टा प्रतीहारी। ]

एसा भअवदी कामन्दई।

उभे। किं भअवदी ?

प्रती। भट्टिदारिअं दट्टुकामा आअदा।

उभे। तदो किं विलम्बीअदि ?

प्रतीहारी निष्क्रान्ता। ]

[ मालती चित्रफलकं आच्छादयति। ]

लव। [ स्वगतं। ] सुसमीहिदं क्खु जादम्।

[ ततः प्रविशति, कामन्दकी अवलोकिता च। ]

काम। साधु सखे ! भूरिवसो ! साधु, प्रभवति निजस्य कन्यकाजनस्य महाराज इत्युभयलोकाविरुद्धं वचनमुपन्यस्तम्। अपिच। अद्य मन्मथोद्यानवृत्तान्तेन भगवतो विधेः अनुकूलतामवगच्छामि। वकुलावलीचित्रफलकव्यतिकरसंविधानकौतुकम् अद्भुतं प्रमोदमुल्लासयति। इतरेतरानुरागो हि दारकर्मणि पराध्यं मङ्गलं, गीतश्चायमर्थोऽङ्गिरसा, यस्यां वाङ्मनश्चक्षुषोरनुबन्धः तस्यामृद्धिरिति।

अव। एसा मालदी।

काम। [ निर्वर्ण्य। ]

---

अत्र परीणेति किं योगे तृतीया। तु किन्तु मम तातः पिता दयितः प्रियः श्लाघ्यः अमलान्वया जननी श्लाघ्येत्यर्थः, अमलिनं निर्मलं कुलस्य श्लाघ्यं न तु अयं इदिस्थः माधवरूपी जनः नैव श्लाघ्यः न च दृष्टः जीवितं जीवनं ममेत्यर्थः न च श्लाघ्यं स्वजीवनपरित्यागाभिलाषात् अश्लाघ्यत्वं स्वजीवनस्येति भावः।

निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा,
कलाशेषा मूर्त्तिः शशिन इव नेत्रोत्सवकरी।
अवस्थामापन्ना मदनदहनोद्दाहविधुरा-
मियं नः कल्याणी रमयति मनः कम्पयति च ॥ (३)

अपि च। परिपाण्डुपांसुलकपोलमाननम्
दधती, मनोहरतरत्वमागता।
रमणीयजन्मनि जने परिभ्रमन्
ललितो विधिर्विजयते हि मान्मथः ॥ (४)

अथवा। नियतमनया सङ्कल्पनिर्मितः प्रियसमागमोऽनुभूयते। तथाहि अस्याः।

नीवीबन्धोच्छ्वसनमधरस्पन्दनं, दोर्विषादः,
स्वेदश्चचुर्मसृणमधुराकेकरस्निग्धतारम्।
गात्रस्तम्भः, स्तनमुकुलयोरुत्प्रबन्धः प्रकम्पो,
गण्डाभोगे पुलकपटलं, मूर्च्छना, चेतना च ॥ (५)

---

(३) निकाममिति। मदनदहनोद्दाहविधुरां विरहानलसन्तापखिन्नामवस्थां आपन्ना प्राप्ता कल्याणी दयाभाजनं शशिनः चन्द्रस्य कलाशेषा कला षोड़शांशः शेषो यस्याः सा एकात्मिका मूर्त्तिस्तनुरिव तथा नेत्रोत्सवकरी नयनानन्दजनिका सरसकदलीगर्भसुभगा मृदुलकदलीपत्रसारकोमला इयं क्षामाङ्गी मालती नः अस्माकं मनः निकाममतितरां रमयति मोदयति कम्पयति च।

(४) परिपाण्डिति। परिपाण्डु पांसुलकपोलं शुभ्रपाटलगण्डस्थलं आननं स्वमुखं दधती बिभ्रती मनोहरतरत्वम् आगता प्राप्ता मालतीति शेषः। अर्थान्तरं न्यस्यति। हि यतः मान्मथः मदनसम्बन्धी ललितः सुन्दरः विधिः रमणीयं मनोज्ञं जन्म यस्य तस्मिन् जने जनेष्वित्यर्थः। जातावेकवचनं परिभ्रमन् विसर्पन् विजयते। सौन्दर्यादीनाम् कामविजयसाधनत्वेन प्रसिद्धे रितिभावः।

(५) नीवीति। नीवीबन्धोच्छ्वसनं वसनग्रन्थिस्खलनं अधरस्पन्दनं दोर्वि-

[ इत्युपसर्पति । ]

लव। [मालतीं चालयित्वा।] मालदि! इदो।

[ उभे उत्तिष्ठतः। ]

माल। भअवदि! वन्दामि।

काम। महाभागे! अभिमतफलभाजनं भूयाः।

लव। एदं आसणं, एत्थ उववसदु भअवदी।

[ सर्वा उपविशन्ति । ]

माल। कुसलं भअवदीए?

काम। [निःश्वस्य।] कुशलमिव।

लव। [ स्वगतं। ] पत्थावणा क्खु एसा कवडनाडअस्स। [ प्रकाशम् ] गुरुअ-बाह-त्थम्भमन्थरिद-कण्ठ-पडिलग्ग-णीसासं, असारिसं जेव्व भअवदीए वअणं, ता किं दाणिं उव्वेअकारणं हुविस्सदि (ष)

काम। ननु अयमेव चीरचीवरविरुद्धः परिचयः।

लव। कधं विअ?

---

(ष) प्रस्तावना खलु एषा कपटनाटकस्य। गुरुवाष्पस्तम्भमन्थरितकण्ठ-प्रतिलग्ननिश्वासमन्यादृशमेव भगवत्या वचनम्। तत् किमिदानीमुद्वेगकारणं भविष्यति। मन्थरितः मन्दीकृतः।

---

पादः करग्लानिः खेदः, मसृणे चिक्कणे मधुरे सुन्दरे आकेकरे आकुञ्चिते स्निग्धे सरले तारे यत्र तत् चक्षुः, गात्रस्तम्भः देहाचलत्वं, स्तनमुकुलयोः मुकुलाकारयोः स्तनयोः उत्प्रबन्धो विच्छेदशून्यः निरन्तरमित्यर्थः प्रकम्पः, गण्डाभोगे कपोलमण्डले पुलकपटलं पुलकितत्वं, मूर्च्छना, मोहः, चेतना च। अस्याः मालत्या माधवविरहे एते अरक्षतव्यापारविशेषा जायन्ते। विरहविधुरा इयमितिभावः॥

काम। अयि! त्वमपि न वेत्सि?

इदमिह मदनस्य जैत्रमस्त्रं सहजविलासनिबन्धनं शरीरम्।
अनुचितवरसंप्रयोगशोच्यं, विफलगुणातिशयं भविष्यतीति ॥(६)

[मालती वैचित्त्यं नाटयति।]

लव। अत्थि एदं, णरेन्दवअणाणुरोधिणा अमच्चेण णन्दणस्स पडिवण्णा मालदीत्ति सअलो जणो अमच्चं ज्जुगुच्छेदि (स)।

माल। [स्वगतं।] कधं उवहारीकिदह्मि तादेण राइणो? (ह)।

काम। आश्चर्य्यं।

गुणापेक्षाशून्यं कथमिदमुपक्रान्तमथवा,
कुतोऽपत्यस्नेहः कुटिलनयनिष्णातमनसाम्?।
इदं त्वैदंपर्य्यं यदुत नृपतेर्नर्मसचिवः,
सुतादानान्मित्रं भवतु. स हि मे नन्दन इति ॥ (७)

---

(स) अस्त्येतन्नरेन्द्रवचनानुरोधिना अमात्येन नन्दनस्य प्रतिपन्ना मालतीति, सकलो जनोऽमात्यं जुगुप्सते।

(ह) कथमुपहारीकृतास्मि तातेन राज्ञः?

---

(६) इदमिति। इह अत्र इदं मदनस्य जैत्रमस्त्रं जयशीलमायुधस्वरूपं सहजविलासनिबन्धनं नैसर्गिकभावमूलकं शरीरं अनुचितवरस्य संप्रोगेण शोच्यं शोचनीयं सत् विफलगुणातिशयं विफलं गुणातिशय्यं यस्य तत् भावप्रधाननिर्देशः भविष्यति ॥

(७) गुणैरिति। गुणापेक्षाशून्यं यथायथा गुणमनपेक्ष्यैवेत्यर्थः। कथमिद-मुपक्रान्तं आरब्धं एतदनुचितमित्यर्थः। अथवा कुटिलनयनिष्णातमनसां

माल । [ स्वगतं । ] राआराहणं क्खु तादस्स गुरुश्चं, ण उण मालदी (क)

लव । एव्वं जधा भअवदीए आणत्तं, अण्णधा तस्सिं वरे दुद्दंसणे अइक्कन्त-जोव्वणे किं ण विआरिअं अमच्चेण ? (ख) ।

माल । [स्वगतं । ] हा हदम्हि ! समुवत्थिदाणत्थ-वज्ज-पडणा मन्द-भाइणी (ग) ।

लव । ता पसीददु भअवदी, परित्ताहि इमादो जीविद-मरणादो पिअसहीं, तवावि एषा दुहिदा ज्जेव्व (घ) ।

काम । अयि, सरले ! किमत्रभवत्या मया शक्यं कर्त्तुम् ? प्रभवति प्रायः कुमारीणां जनयिता दैवञ्च । यच्च किल कौशिकी शकुन्तला दुष्मन्तं, अप्सराः पुरूरवसञ्चकमे, इत्याख्यानविद आचक्षते, वासवदत्ता च राज्ञे सञ्जयाय पित्रा दत्त-

---

(क) राजाराधनं खलु तातस्य गुरुकं न पुनर्मालती ।

(ख) एवं यथा भगवत्या आज्ञप्तं, अन्यथा तस्मिन् वरे दुर्दर्शने अतिक्रान्तयौवने, किं न विचारितममात्येन ?

(ग) हा हतास्मि समुपस्थितानर्थरूपवज्रपतना मन्दभागिनी ।

(घ) तत्प्रसीदतु भगवती, परित्रायस्व अस्माज्जीवितमरणात् प्रियसखीं, तवाप्येषा दुहितैव ।

---

कठिननीतिमार्गानुसारिणामित्यर्थः । मन्त्रिणां कुतोऽपत्यस्नेहः ? नास्तीत्यर्थः । नीतिमार्गस्य अनुल्लङ्घनीयत्वादिति भावः । इदन्तु अपत्यस्नेहशून्यत्वम् ऐदम्पर्य्यम् इदं परमेतदभिप्रायसदृशं भवतीत्यर्थः यद् यत उत निश्चये नृपतेः नर्मसचिवः सुतादानात् तनयादानात् अत्र सम्बन्धविवक्षया षष्ठी । मित्रं सुहृद् भवतु हि यतः स मे मम नन्दन आनन्दजनक इति अहं विश्वसिमि यदेतत् वचनम् ऐदम्पर्य्यमेव ॥

मात्मानमुदयनाय प्रायच्छत् इत्यादि, तदपि साहसिक्यमित्य-नुपदेष्टव्यकल्पं, सर्वथा,

राज्ञः प्रियाय सुहृदे सचिवाय कार्य्यात्
दत्त्वात्मजां भवतु निर्वृतिमान् अमात्यः।
दुर्दर्शनेन घटतामियमप्यनेन,
धूमग्रहेण शशिनो विमला कलेव॥ (८)

माल। [सास्रं स्वगतं।] हा ताद! तुमम्पि मम णाम एव्वंत्ति सव्वधा जिदं भोअतिह्णाए (ङ)।

अव। चिराइदं भअवदीए, णं भणामि, असुत्थसरीरो महाभाओ माहवोत्ति (च)।

काम। गम्यते, वत्से! अनुजानीहि माम्।

लव। [जनान्तिकं।] सहि! मालदि! सम्पदं भअवदीए सआसादो, तस्स महाणुभाअस्स उग्गमं जाणीमो (छ)।

---

(ङ) हा तात! त्वमपि मम नाम एवमिति सर्वथा जितं भोगतृष्णया।

(च) चिरायितं भगवत्या, ननु भणामि अस्वस्थशरीरः खलु महाभागो माधव इति।

(छ) सखि! मालति! साम्प्रतं भगवत्याः सकाशात्, तस्य महानुभावस्य उद्गमं जानीमः। उद्गमम् उत्पत्तिम्।

---

(८) राज्ञ इति। अमात्यः सचिवः कार्य्यात् कार्य्यवशात् राज्ञो नृपस्य प्रियाय सुहृदे सचिवाय अमात्याय आत्मजां मालतीं दत्त्वा निर्वृतिमान् सुखी भवतु। धूमग्रहेण धूमाकारराहुग्रहेण दर्शनशून्येनेत्यर्थः। शशिनः चन्द्रस्य विमला मनोहरा कलेवेति निदर्शना। वार्द्धक्यात् कौरूप्याच्च दुर्दर्शनेन अनेनापि इयं मालती घटतां वर्त्तताम् इयमस्य सहचारिणी भवतु इत्यर्थः। अत्र गम्यमानार्थत्वात् सहाप्रयोगेऽपि तृतीया।

माल। [अपवार्य्य] सहि ! अत्थि मे कोदूहलं ।

लव। [प्रकाशं।] भअवदि ! को एसो माहवो णाम, जस्स भअवदी सिणेहगुरुअं अत्ताणं धारेदि? (ज)।

काम। अप्रस्ताविकी महती एषा कथा।

लव। तधावि आचक्खदु, मे भअवदो। पसादं करेदु (झ)

काम। श्रूयतां, अस्ति विदर्भाधिपतेरमात्यः, समग्रधुर्य्यपुरुषप्रकाण्डचक्रचूड़ामणिर्देवरातो नाम, यम् अशेषभुवनमहनीयपुण्यमहिमानम् आत्मनः सतीर्थ्यं पितैव ते जानाति योऽसौ यादृशश्चेति। अपि च।

व्यतिकरितदिगन्ताः श्वेतमानैर्यशोभिः,
सुकृतविलसितानां स्थानमूर्जस्वलानाम्।
अकलितमहिमानः केतनं मङ्गलानाम्,
कथमपि भुवनेऽस्मिन् तादृशाः सम्भवन्ति॥ (९)

माल। सहि ! तं क्खु भअवदीगहिदणामधेअं सव्वदा तादो सुमरेदि (ञ)।

---

(ज) भगवति। क एष माधवो नाम, यस्य भगवती स्नेहगुरुकमात्मानं धारयति? यस्य कृते इत्यर्थः।

(झ) तथाप्याचष्टां मे भगवती प्रसादं करोतु।

(ञ) सखि! तं खलु भगवतीगृहीतनामधेयं सर्वदा तातः स्मरति।

---

(९) व्यतिकरितेति। श्वेतमानैः शुभ्रैर्यशोभिर्व्यतिकरितदिगन्ता व्याप्तदिग्विभागाः ऊर्जस्वलानां बलवतां सुकृतविलसितानां पुण्यपरिणामानां स्थानम् अकलितमहिमानः अविदितमाहात्म्या मङ्गलानां केतनं निवासः उभयत्र विधेयप्राधान्यात् नपुंसकत्वम्। तादृशा महान्त इत्यर्थः। अस्मिन् भुवने कथमपि केनचित् कारणगौरवेण सम्भवन्ति। शापादि विना एतादृङ्महतां कुतः प्रादुर्भाव इति भावः॥

लव। सहि ! समं क्खु विज्जाहिगमो किदोत्ति, तक्कालसंवेदिणो मन्तन्ति (ट)।

काम। तत उदयगिरेरिवैकएव
स्फुरितगुणद्युतिसुन्दरः कलावान्।
इह जगति महोत्सवस्य हेतु-
र्नयनवतामुदियाय बालचन्द्रः॥ (१०)

लव। [जनान्तिकं।] सहि ! अवि णाम माहवो भवे ?

काम। असौ विद्याधारः शिशुरपि विनिर्गत्य भवनात्
इहायातः सम्प्रत्यविकलशरच्चन्द्रमधुरः।
यदालोकस्थाने भवति पुरमुन्मादतरलैः,
कटाक्षैर्नारीणां कुवलयितवातायनमिव॥ (११)

---

(ट) सखि! समं खलु विद्याधिगमः कृत इति तत्कालसंवेदिनो मन्त्रयन्ते।

---

(१०) तत इति। स्फुरितगुणद्युतिः प्रकाशमानगुणोत्कर्षश्चासौ सुन्दरश्च कलावान् चतुःषष्टिकलाकुशलः नयनवतां दृग्वतां महोत्सवस्य हेतुः इह जगति ततो देवरातात् उदयगिरेः उदयाचलाद्व बालचन्द्र इव उदियाय उत्पन्न इत्युपमा। चन्द्रेऽपि पूर्वोक्तानि विशेषणानि योज्यानि।

(११) असाविति। विद्याधारः विद्यानिधिः शिशुरपि बालोऽसौ माधवः भवनात् गृहात् विनिर्गत्य गृहादिकं हित्वा विदेशं गत्वेत्यर्थः। सम्प्रति प्रत्यक्षकाले अविकलशरच्चन्द्रमधुरः प्रकृतशारदशशधरसुन्दर इत्यर्थः। इह अत्र देशे आयातः आगतः। यस्य आलोकस्थाने दर्शनस्थानभागे उन्मादतरलैः मत्ततया चपलैः। माधवदर्शनजन्यत्यशत्वरूपोऽत्र उन्मादः। नारीणां कटाक्षैः अपाङ्गभागैः कुवलयितानि सञ्जातकुवलयानि तारकादित्वादितच् प्रत्ययः।

अत्र बालसुहृदा मकरन्देन सह, विद्यामान्वीक्षिकीमधिगच्छति, स एव माधवो नाम इति ।

माल । [ सानन्दं जनान्तिकं । ] सहि ! सुदं तुए ?

लव । सहि ! कुदोवा महोदहिं वज्जिअ पारिजादस्स उग्गमोत्ति (ठ) ।

[ नेपथ्ये शङ्खध्वनिः । ] ]

काम । अहो ! कालातिपातः सम्प्रति हि ।

क्षिपन्निद्रामुद्रां मदनकलहच्छेदसुलभाम्
अवाप्तोत्कण्ठानां विहगमिथुनानां प्रथमतः ।
दधानः सौधानामलघुषु निकुञ्जेषु घनताम्
असौ सन्ध्याशङ्खध्वनिरनिभृतः खे विचरति ॥ (१२)

---

(ठ) सखि ! कुतो वा महोदधिं वर्जयित्वा पारिजातस्य उद्गमः इति ।

---

वातायनानि गवाक्षाणि यत्र तदिव पुरं भवति । अत्र माधवदर्शनौत्सुक्यरूपमत्तत्वेन नारीणां गवाक्षप्रदेशे समागमात् दीर्घापाङ्गविक्षेपणाच्च कुवलयकुसुमत्वमुत्प्रेक्ष्यते ।

( १२ ) क्षिपन्निति । असावयमिति त्वरोक्तिः । सौधानां प्रासादानां अलघुषु घनेषु निकुञ्जेषु घनतां निविड़तां दधानः सन्ध्याशङ्खध्वनिः सायं शङ्खनिनादः प्रथमतः आदौ अवाप्तौत्कण्ठानां रात्रौ विरहात् प्राप्तविरहवेदनानां विहगमिथुनानां चक्रवाकद्वन्द्वानां मदनकलहच्छेदसुलभां सुरतावसानसुलभां सुरतश्रमभरजनितामित्यर्थः निद्रासङ्कोचं क्षिपन् प्रबोधयन्नित्यर्थः । अनिभृतः उच्चैराभातः सन् खे आकाशे विचरति प्रसरति विलीनो भवति । शब्दगुणमाकाशमिति तार्किकाः ।

तदुत्तिष्ठामः। [इत्युत्तिष्ठति।]

माल। [अपवार्य्य।] कधं उवहारीकिदह्मि राइणो तादेण, राआराहणं क्खु, तादस्स गुरुअं ण उण मालदी। [सास्रं।] हा ताद! तुमम्पि णाम मम एव्वं त्ति सव्वधा जिदं भोअतिह्लाए। [सानन्दं।] कधं महाकुलप्पभवो वि सो महाणुभाओ सुभणिदं पिअसहीए कुदो बा महोदहिं वज्जिअ पारिजादस्स उग्गमोत्ति। अवि णाम तं पुणोवि पेक्खिस्सं (ड)।

लव। अवलोइदे! इदो एहि, एदिणा सोवाणेण ओदरह्म। (ढ)

काम। [अपवार्य्य।] साधु, सम्प्रति मया तटस्थयैव, मालतीं प्रति निसृष्टार्थदूतीकृत्यस्य, लघुकृतो भारः। तथाहि।

वरेऽन्यस्मिन् द्वेषः, पितरि विचिकित्सा च जनिता,
पुरावृत्तोद्गारैरपि च कथिता कार्य्यपदवी।
स्तुतं तन्माहात्म्यं, यदभिजनतो यच्च गुणतः
प्रसङ्गात् वत्सस्येत्यथ विधिविधेयः परिचयः॥ (१३)

[इति निष्क्रान्ताः सर्वे।]

इति मालतीमाधवे धवलगृहो नाम द्वितीयोऽङ्कः।

---

(ड) कथमुपहारीकृतास्मि राज्ञस्तातेन, राजाराधनं खलु तातस्य गुरुकं, न पुनर्मालती। हा तात! त्वमपि नाम ममैवमिति, सर्वथा जितं भोगतृष्णया। कथं महाकुलप्रभवोऽपि स महानुभावः सुभणितं प्रियसख्या, कुतो वा महोदधीत्यादि। अपि नाम पुनरपि तं प्रेक्षिष्ये।

(ढ) अवलोकिते! इत इत एतेन सोपानेनावतरावः।

---

(१३) वर इति। अन्यस्मिन् वरे पत्यौ नन्दने द्वेषः, पितरि विचिकित्सा निन्दा च जनिता पुरावृत्तोद्गारैः इतिवृत्तकथनैः, शकुन्तलादीनां पितृनिरपेक्षात्मदानकथनैः कार्य्यपदवी कर्मपथः कथिता च वत्सस्य प्रसङ्गात् अभिजनतः

# तृतीयोऽङ्कः ।



ततः प्रविशति बुद्धरक्षिता ।

बुद्ध । [ परिक्रम्याकाशे । ] अवलोइदे ! अवि जाणासि कहिं भअवदीत्ति ? (क)

[ प्रविश्य अवलोकिता । ] बुद्धरक्खिदे ! किं प्पमुद्धासि ? कोवि अकालो भअवदीए पिण्डवादवेलं वज्जिअ मालदीं अणुवत्तमाणाए (ख) ।

बुद्ध । हुं, तुमं उण कहिं पत्थिदासि ? (ग)

अव । अहं क्खु भअवदीए माहवसआसं अणुप्पेसिदा, सन्दिट्टं अ तस्स, जधा सङ्करघरसम्बद्धं कुसुमाअरं णाम उज्जाणं गदुअ कुज्जअणिउञ्ज-पेरन्त-रत्तासोअ-गहणे चिट्ठत्ति, गदो अ तत्थ माहवो (घ) ।

---

( क ) अवलोकिते ! अपिनाम जानासि कुत्र भगवतीति ?

( ख ) बुद्धरक्षिते ! किं प्रमुग्धासि ? कोऽपि अकालो भगवत्याः पिण्डपातवेलां वर्जयित्वा मालतीमनुवर्त्तमानायाः । पिण्डपातः सौगतान्नम् । कोऽपि अकालः निषिद्धकालः । भगवती सदैव मालतीसमीपे वर्त्तते इति भावः ।

(ग) हुं त्वं पुनः कुत्र प्रस्थितासि ?

( घ ) अहं खलु भगवत्या माधवसकाशमनुप्रेषिता, सन्दिष्टञ्च तस्य, यथा, शङ्करगृहसम्बद्धं कुसुमाकरं नामोद्यानं गत्वा, कुब्जकनिकुञ्जपर्य्यन्तरक्ताशोकगहने तिष्ठ इति, गतश्च तत्र माधवः । कुब्जकम् कूशा इति ख्यातः तरुः ।

---

यद् गुणतश्च यत् माहात्म्यं तत् स्तुतमित्यर्थः । इति मया ज्ञातमिति भावः । अद्य अनन्तरं परिचयः समागमः विधिविधेयः दैवसम्पादनीयः । दैवं विना अघटमानपदार्थस्य घटनानुपपत्तेरिति भावः ।

बुद्ध। किंत्ति तहिं माहवो अणुप्पेसिदो ? (ङ)

अव। अज्ज कसणचउद्दसीत्ति, तत्थ भअवदीए समं मालदी सङ्करघरं गमिस्सदि, तदो किल एव्वं सोहग्गं वढ्ढदित्ति देवदाराहणणिमित्तं सहत्थकुसुमावचअं उद्दिसिअ, लवङ्गिआदुदीआं मालदीं, भअवदीजेव्व कुसुमाअरुज्जाणं आणइस्सदि, तदो अण्णोण्णदंसणं भोदुत्ति। तुमं उण कहिं पत्थिदा ? (च)।

बुद्ध। अहं क्खु सङ्करघरं जेव्व पत्थिदाए पिअसहीए मदअन्तिआए आमन्तिदा, तदो भअवदीए पादवन्दणं कदुअ, तहिं जेव्व गच्छामि (छ)।

अव। तुमं क्खु भअवदीए जस्सिं पओअणे णिउत्ता, तत्त को वुत्तन्तो ? (ज)।

बुद्ध। मए क्खु भअवदीए समादेसेण, तासु तासु विस्सम्भकधासु, ईरिसो तारिसोत्ति मअरन्दस्स उअरि पिअसहीए मदअन्तिआए दूरं आरोविदो परोक्खाणुराओ एसो अ से मणोरहो, अवि णाम तं पेक्खामित्ति (झ)।

---

(ङ) किमिति तत्र माधवोऽनुप्रेषितः ? ।

(च) अद्य कृष्णचतुर्दशीति, तत्र भगवत्या समं मालती शङ्करगृहं गमिष्यति, ततः किल एवं सौभाग्यं वर्द्धत इति, देवताराधननिमित्तं स्वहस्तकुसुमावचय मुद्दिश्य, लवङ्गिकाद्वितीयां मालतीं भगवत्येव कुसुमाकरोद्यानमानेष्यतीति, ततोऽन्योन्यदर्शनं भवतु इति। त्वं पुनः क्व प्रस्थिता ?

(छ) अहं खलु शङ्करगृहमेव प्रस्थितया प्रियसख्या मदयन्तिकया आमन्त्रिता, ततो भगवत्याः पादवन्दनं कृत्वा तत्रैव गच्छामि।

(ज) त्वं खलु भगवत्या यस्मिन् प्रयोजने नियुक्ता, तत्र को वृत्तान्तः ? मकरन्दस्य मदयन्तिकापरिणयेऽपि किं वृत्तम् इत्यर्थः।

(झ) मया खलु भगवत्याः समादेशेन तासु तासु विस्रम्भकथासु, ईदृश-

अव। साहु बुद्धरक्खिदे ! साहु। (ञ)

बुद्ध। एहि गच्छम्ह। (ट)

[ इति परिक्रम्य निष्क्रान्तौ प्रवेशकः। ]

[ ततः प्रविशति कामन्दकी। ]

तथा विनयनम्रापि मया मालत्युपायतः।
नीता कतिपयाहोभिः सखीविस्रम्भसेव्यताम् ॥ (१)

सम्प्रति। व्रजति विरहे वैचित्त्यं, नः प्रसीदति सन्निधौ,
रहसि रमते, प्रीत्या दायं ददात्यनुवर्त्तते।
गमनसमये कण्ठे लग्ना, निरुध्य निरुध्य माम्,
सपदि शपथैः प्रत्यावृत्तिं प्रणम्य च याचते ॥ (२)

इदञ्च साधीयस्तत्र सम्प्रत्याशानिबन्धनम्।

---

त्वाट्टश इति मकरन्दस्योपरि प्रियसख्या मदयन्तिकाया दूरमारोपितः परीक्षानुराग एष चास्या मनोरथः, अपि नाम तं प्रेक्ष्ये इति ? अस्याः मदयन्तिकायाः। तम् मकरन्दम्।

(ञ) साधु बुद्धरक्षिते ! साधु।

(ट) एहि गच्छावः।

---

(१) तथेति। मया तथा उपायतः तादृशोपायं विधाय ल्यब्लोपे पञ्चमी। विनयनम्रापि विनीतापि मालती कतिपयाहोभिः कियद्भिर्दिवसैःसखीविस्रम्भसेव्यतां सखीभिर्लवङ्गिकादिभिरिव विस्रम्भं यथा तथा सेव्यतां उपचारार्हतां नीता प्रापिता कतिचिद्दिनैरेव सा मालती सखीवत् विश्वासस्थानत्वं प्रापिता इत्यर्थः ॥

(२) व्रजतीति। नः अस्माकं विरहे वैचित्त्यं शून्यमनस्कत्वं व्रजति नोऽस्माकं सन्निधौ प्रसीदति प्रसन्ना भवति। रहसि विजने रमते उत्कण्ठासहितं माधवकथामुद्दिश्य अस्माभिः सहेत्यर्थः। प्रीत्या हर्षेण दायमुत्तरं ददाति अनुवर्त्तते अस्माकं सङ्गं न त्यजति। तथा गमनसमये कण्ठे लग्ना बाहुभ्यां कण्ठं धृत्वेत्यर्थः। मां निरुध्य निरुध्य आभीक्ष्ण्ये द्विरुक्तिः। सपदि तत्क्षणात् शपथैर्दिव्यैः प्रणम्य नमस्कृत्य च प्रत्यावृत्तिं पुनरागमनं याचते इत्येतत् सर्वं चेष्टितं शुभाय इतिभावः।

शाकुन्तलादीनितिहासवादान् प्रस्ताविताननयपरैर्वचोभिः।
श्रुत्वा मदुत्सङ्गनिवेशिताङ्गी चिराय, चिन्ताखिमितत्वमेति॥
(३)

तदद्य माधवसमक्षमुत्तरमुपक्रमिष्ये।
[ नेपथ्याभिमुखम्। ] वत्से! इत इतः।

[ ततः प्रविशति मालती लवङ्गिका च। ]

माल। [ स्वगतम्। ] कधं उवहारीकिदह्मि। [ इत्यादि पूर्वोक्तं पठति। ]

लव। सहि! एसो क्खु महुर-महु-रसोल्लोल-मञ्जरी-कवलण-केलि-कल--कोइल--उल--कोलाहलाकुलिद--सहआर-सिहरुड्डीण-चडुल-चञ्चरीअणिअर-व्वदिकरुद्दलिद-दल-कराल-चम्प-आहिवास-मणोहरो, मराल-मंसल-जहण-परिणाहुव्वह-णमन्थरोरुभर-विसंठुल-खलिद-चलण--संचार-मसिण-गमणोब-णीद-सेअसीअर-सुहाविंदुइज्जन्त-मुद्ध--मुह--चन्दणाअमाण-सीअलप्फरसो, तुमं परिस्सअदि कुसुमाअरुज्जाणमारुदो, ता पविसह्म (ठ) [ इति परिक्रम्य प्रविशतः। ]

---

(ठ) सखि! एष खलु मधुरमधुरसार्द्रार्द्रमञ्जरीकवलनकेलिकलकोकिल-कुलकोलाहलाकुलितसहकारशिखरोड्डीन-चटुलचञ्चरीकनिकरव्यतिकरोद्दलितदल-करालचम्पकाधिवासमनोहरो, मरालमांसलजघनपरिणाहोद्वहनमन्थरोरुभर-विसंष्ठुलस्खलितचरणसञ्चारसमसृणगमनोपनीतखेदशीकरसुधाबिन्दूयमानमुग्धमुख-चन्द्रचन्दनायमानशीतलस्पर्शः त्वां परिष्वजति कुसुमाकरोद्यानमारुतः तत् प्रविशावः। अत्रैष खलु कुसुमाकरोद्यानमारुतस्त्वां परिष्वजतीति सम्बन्धः।

---

(३) अन्यपरैः वचोभिः प्रस्ताविताम् कथाप्रसङ्गेन उत्थापितान् शाकुन्तला-दीन् इतिहासप्रबन्धान् श्रुत्वा मदङ्कनिवेशितशरीरा सती चिरकालं व्याप्य चिन्ता-सम्भावत्वमेति।

[ ततः प्रविशति माधवः । ]

माध। सहर्षं। हन्त! परागता भगवती। इयं हि मम।

आविर्भवन्ती प्रथमं प्रियायाः सोच्छासमन्तःकरणं करोति।
सन्तापदग्धस्य शिखण्डियूनोवृष्टेः पुरस्तादचिरप्रभेव॥ (४)

[दृष्ट्वा।] अये! लवङ्गिकाद्वितीया मालत्यपि।

आश्चर्य्यमुत्पलदृशो वदनामलेन्दु-
सान्निध्यतो मम मुहुर्जडिमानमेत्य।
जाड्येन चन्द्रमणिनेव महीधरस्य
सन्धार्य्यते द्रवमयो मनसो विकारः॥ (५)

---

कीदृशः। मधुरमधुरसेनात्याद्रीया मञ्जर्याः कवलने भक्षणे केलिः क्रीड़ा तया कलमव्यक्तध्वानं यत् कोकिलकुलं तस्य कोलाहलेनाकुलितात् सहकारशिखरात् चूतशिखरादुड्डीनश्चटुलो मनोज्ञो यः चञ्चरीकनिवहः भ्रमरसमूहः तस्य व्यतिकरेण सम्पर्केण उद्दलितदलस्य विकसितपुटस्य अतएव करालस्य दन्तुरस्य चम्पकस्य अधिवासेन गन्धेन मनोहरः। एतेन शैत्यसौगन्ध्ये दर्शिते। सहकारमञ्जरीणां कोकिलाकुलत्वं भ्रमरस्य तत्त्यागे हेतुः। मराली हंसी हंसी वा तस्य मांसलजघनपरिणाहोद्वहनेन मन्थरावलसौ यावूरू। त्वदीयाविति भावः। तयोः भरेण गौरवेण विसंष्ठुलं विषमं यथा तथा खलितस्य चरणस्य सञ्चारेण मसृणं मन्दं यद्गमनं तेनोपनीतेन खेदशीकरेण सुधाविन्दु सदृशे मुग्धमुखचन्द्रे। अर्थात्तव। चन्दनायमानः शीतलस्पर्शो यस्य सः। अनेन मान्द्यं शैत्यमपि ध्वनितम्।

---

(४) आविरिति। सन्तापदग्धस्य निदाघतप्तस्य शिखण्डियूनः तरुणमयूरस्य वृष्टेः पुरस्तात् अग्रे आविर्भवन्ती प्रकाशमाना अचिरप्रभा विद्युत् इव सन्तापदग्धस्य कामानलतप्तस्य मम प्रियायाः मालत्याः पुरस्तात् प्रथमं आविर्भवन्ती इयं भगवती कामन्दकी मम अन्तःकरणं चित्तं सोच्छासं सविकासं करोति।

(५) आश्चर्य्यमिति। उत्पलदृशः पङ्कजाक्ष्या वदनमेवामलेन्दुर्विमलशशी तस्य सान्निध्यतः सामीप्यतः मम मुहुरतितरां जड़िमानं जाड्यं कार्य्याक्षमत्वरूपम्

सम्प्रति रमणीयतरा मालती—

ज्वलयति मनोभवाग्निं, मदयति हृदयं, कृतार्थयति चक्षुः।
परिस्पन्दितचम्पकावलिविलासलुलितालसैरङ्गैः॥ (६)

माल। सहि! इमस्सिं कुञ्जअणिउञ्जे कुसुमाइं अवचि-णुह्म (ड)।

माध।

प्रथमप्रियावचनसंश्रवस्फुरत्पुलकेन सम्प्रति मया विडम्ब्यते।
घनराजिनूतनपयःसमुच्चणच्चणबद्धकुड्मलकदम्बडम्बरः॥ (७)

लव। सहि! एव्वं करेह्म। (ढ) [पुष्पावचयं नाटयतः।]

माध। अपरिमियाश्चर्य्यमाचार्य्यकं भगवत्याः।

माल। सहि! इदोवि अस्सिं अवचिणुह्म। (ण)

---

(ड) सखि! एतस्मिन् कुञ्जकनिकुञ्जे कुसुमानि अवचिनुवः।

(ढ) सखि! एवं कुर्वः।

(ण) इतोऽप्यन्यस्मिन् अवचिनुवः।

---

एत्य प्राप्य जाड्येन जड़भावापन्नेन चन्द्रमणिना चन्द्रकान्तमणिना महीधरस्य पर्वतस्य इव मनसोविकारः अधैर्य्यरूपः द्रवमयः सम्भाव्यते निश्चीयते जनैरितिशेषः। चन्द्रोदये पाषाणद्रव इव मालत्युदये मम चित्तविकारो द्रवमयो भवति। अत्र मनसः द्रवत्वासम्भवेऽपि तत्सम्बन्धरूपकल्पनातिशयोक्तिः सा चोत्प्रेक्षया संस्रज्यत इत्यलङ्कारद्वयस्य सङ्करः।

(६) ज्वलयतीति। परिस्पन्दितानां निपीड़ितानां चम्पकावलीनां विलास इव लुलितालसानि स्फुटसुन्दराणि मन्दानि अङ्गानि तैर्मनोभवाग्निं कामानलं ज्वलयति प्रदीपयति हृदयं मदयति मत्तं करोति चक्षुः कृतार्थयति सफलयति एतद्दर्शनेन व्याकुलश्चाव्याकुलश्चास्मीति भावः।

(७) प्रथमेति। सम्प्रति अधुना प्रथममादौ प्रियाया यद्वचनं तत्र संश्रवः विश्वासः प्रियावाक्यं श्रुत्वैव विश्वासो जात इत्यर्थः। तेन स्फुरत्पुलकेन उदञ्चद्रोमाञ्चेन मया घनराजिर्जलदावल्या यत् नूतनपयः तत्क्षणपतितनवजलं तेन यत्

काम। [मालतीं परिष्वज्य।] अयि! विरम, निःसहासि जाता। तथाहि।

खलयति वचनं ते, संश्रयत्यङ्गमङ्गम्
जनयति मुखचन्द्रोद्भासिनः स्वेदविन्दून्।
मुकुलयति च नेत्रे सर्वथा सुभ्रु! खेद-
स्त्वयि विलसति तुल्यं वल्लभालोकनेन॥ (८)

[मालती लज्जते।]

लव। सोहणं भअवदीए आणत्तम्। (त)

माध। हृदयङ्गमः परिहासः।

काम। तदास्यतां, किञ्चिदाख्येयमाख्यातुकामास्मि।

[सर्वा उपविशन्ति।]

काम। [मालत्याश्चिवुकमुन्नमय्य।] शृणु विचित्रमिदं, सुभगे!।

माल। अवहिदह्मि। (थ)

काम। अस्ति तावदेकदा प्रसङ्गतः कथित एव मया माधवाभिधानः कुमारो यस्त्वमिव मामकीनस्य मनसो द्वितीयं निबन्धनम्।

लव। सुमरामो। (द)

---

(त) शोभनं भगवत्याज्ञप्तम्।

(थ) अवहितास्मि। (द) स्मरामः।

---

समुच्चयं सम्यक् प्रोच्चयं सेक इति यावत्। तेन चयं बद्धाः कुड्मला मुकुला यस्य स कदम्बः नीपकुसुमं तस्य डम्बरः समूहः विडम्ब्यते अनुक्रियते।

(८) खलयतीति! हे सुभ्रु! उत्कृष्टभ्रूयुते! मालति! खेदः क्लेशः ते तव वचनं खलयति वाक्यस्खलनं करोति अङ्गमङ्गं प्रत्यवयवं संश्रयति अवलम्बते मुखचन्द्रं उद्भासयन्तीति तान् स्वेदविन्दून् घर्मजललवान् जनयति नेत्रे च मुकुल-

काम। स खलु मन्मथोद्यानयात्रादिवसात्प्रभृति दुर्मनायमानः, परवानिव शरीरोपतापेन।

यदिन्दावानन्दं, प्रणयिनि जने वा, न भजते,
व्यनक्त्यन्तस्तापं तदयमतिधीरोऽपि विषमम्।
प्रियङ्गुश्यामाङ्गप्रकृतिरपि, चापाण्डुमधुरम्
वपुः क्षामं क्षामं वहति, रमणीयश्च भवति॥ (९)

लव। एवम्पि तस्सिं अवसरे भअवदीं तुवराअन्तीए, अवलोइदाए उदीरिदं आसि, जधा अस्सत्थशरीरो माहवोत्ति (ध)।

काम। यावदस्पृणवं, मालत्येवास्य मन्मथोन्मादहेतुरिति, ममापि स एव निश्चयः।

अनुभवं वदनेन्दुरुपागमन्नियतमेव यदस्य महात्मनः।
क्षुभितमुत्कलिकातरलं मनः पय इव स्तिमितस्य महोदधेः॥१०॥

---

(ध) एवमपि तस्मिन्नवसरे भगवतीं त्वरयन्त्या अवलोकितयोदीरितमासीत्, यथा अस्वस्थशरीरो माधव इति।

---

यति निमीलयति सर्वथा सर्वप्रकारेण वल्लभालोकनेन माधवदर्शनेन तुल्यं निर्विशेषं यथा तथा विलसति। श्लेषेण माधवकर्तृकदर्शनेन त्वम् अतितरां खिन्नासि माधवोऽपि मालतीदर्शनेन खिन्नोजातः। तेनोभयोः साम्यावस्था उक्ता।

(९) यदिति। इन्दौ चन्द्रे, प्रणयिनि जने प्रियतमजने वा यद् यस्मात् आनन्दं हर्षं न भजते तत्तस्मादयमतिधीरो विवेकशीलोऽपि विषमं अन्तस्तापं व्यनक्ति प्रकाशयति। एतदाकारकर्शने अस्यान्तर्गतस्तापः सहनानुमेय इत्यर्थः। प्रियङ्गुश्यामाङ्गप्रकृतिरपि प्रियङ्गुफलवत् श्यामस्तथा तद्वत् शीतलप्रकृतिर्माधवोऽपि आपाण्डु सम्यक् पाण्डुरवर्णमत एव मधुरं सुन्दरं वपुः क्षामं क्षामं अतिकृशञ्च इति आभीक्ष्ण्ये द्विर्भावः। वहति धारयति तथा रमणीयश्च भवति। विरहावस्थायां माधवमवलोक्य पूर्वापेक्षया नूतन इव ज्ञायते।

(१०) अनुभवमिति। वदनेन्दुर्मुखचन्द्रः माधवस्येत्यर्थः। अनुभवं चिन्ता

माध। अहो! उपन्यासशुद्धिः, अहो महत्त्वारोपणे यत्नः।

अथवा।

शास्त्रेषु निष्ठा सहजश्च बोधः प्रागल्भ्य मभ्यस्तगुणा च वाणी।
कालावबोधः, प्रतिभानवत्त्वमेते गुणाः कामदुघाः क्रियासु॥११॥

काम। अतस्तेन जीविताटुद्विजमानेन दुष्करमपि न किञ्चित् न क्रियते। असौ हि,

धत्ते चक्षुर्मुकुलिनि रणत्कोकिले बालचूते
मार्गे गात्रं क्षिपति वकुलामोदगर्भस्य वायोः।
दाहप्रेम्णा सरसबिसिनीपत्रमात्रान्तराय-
स्ताम्यन्मूर्त्तिः श्रयति बहुशो मृत्यवे चन्द्रपादान्॥ (१२)

माध। अन्य एव अत्रभवः कथाप्रकारो भगवत्याः।

---

मालतीविषयकमित्यर्थः। नियतमेव सदैव उपागमत् माधवमुखमवलोक्य ज्ञायते यदस्य काचन महती चिन्ता विद्यत इति शेषः। तत्र किं प्रमाणमित्यत आह यदिति। यत् यस्मात् अस्य महात्मनो माधवस्य उत्कलिकया उत्कण्ठया तरलं चञ्चलं मनः स्तिमितस्य निश्चलस्य महोदधेः सागरस्य पय इव क्षुभितं क्षुब्धं कर्त्तरि क्तः। निदर्शनालङ्कारः।

(११) शास्त्रेष्विति। शास्त्रेषु निष्ठा अध्यवसायः, सहजः स्वाभाविकश्च बोधो,ज्ञानं, प्रागल्भ्यं शास्त्रनैपुण्यं अभ्यस्तगुणा गुणयुक्ता वाणी वाक्यञ्च कालावबोधः, समयप्रतीक्षा प्रतिभानवत्त्वं प्रेक्षावत्त्वम् एते गुणाः क्रियासु कर्मसु कामदुघाः सफला भवन्तीत्यर्थः॥

(१२) धत्त इति। मुकुलिनि कलिकाविशिष्टे रणत्कोकिले शब्दायमानपिके बालचूते चूतवृक्षे चक्षुर्धत्ते। वकुलामोदगर्भस्य वकुलपरिमलसमेतस्य वायोर्मार्गे गात्रं क्षिपति दाहशान्त्यै इति भावः। दाहप्रेम्णा दाहानुरागेण सरसबिसिनीपत्रमात्रान्तरायः सार्द्रकमलिनीदलमात्रेण सविघ्नः सन् अनेनापि मृत्युस्पृहा सत्यपि न फलवती जायते, सरसेत्यादिविशेषणानां तापोपशमकत्वात् तदन्यथाचरणमेव श्रेय इति भावः। अतएव ताम्यन्मूर्त्तिः क्लिश्यद्गात्रः सन् बहुशो वारंवारं मृत्यवे चन्द्रपादान् चन्द्रकरान् श्रयति। मृत्यवे इति क्रियार्थोपादानाच्चतुर्थी। विरहिणस्य चन्द्रकिरणोऽप्यसह्यो भवतीति भावः।

माल । [ स्वगतं । ] अदिदुक्करं करेदि । (न)

काम । तदेवं प्रकृत्या सुकुमारः कुमारः कदाचिदपि अन्यत्र अपरिक्लिष्टपूर्वस्तपस्वी, यतोऽधुना शक्यमनेन मरणमपि अनुभवितुम् ।

माल । [ जनान्तिकं । ] सहि ! अत्तणो कारणादो तस्स सव्वलोअालङ्कारभूदस्स, किम्पि आसङ्कन्तीए भअवदीए भीदाविदह्मि, ता किं दाणिं एत्थ पडिवज्जिस्सं (प) ।

माध । दिष्ट्यानुकम्पितोऽस्मि भगवत्या ।

लव । भअवदी एवंवादिणीत्ति आअक्खीअदि, अह्मा-णम्वि भट्टिदारिआ, भवणासस्सरच्छामुहमुहुत्तमण्डणस्स, तस्स ज्जेव्व बहुसो अणुभूददंसणा भविअ, रविकिरणासिलिट्ठ-सुद्ध-कमलिणी-कन्द-सुन्दरावअव-सोहा-विभाविदाणङ्ग-वेअणा-धिअदर-रमणीआवि, परिअणं दूणेदि । णाभिणन्ददि केलि-कलाओ, केवलं कमलाअमाण-कन्तहत्थ-पल्हत्थ-गण्ड-मण्डला दिआसाइं गमेदि । अविअ । विअसिआरविन्द-मअरन्द-णिस्सन्द-सुन्दरेण, दर-दलिअ-कुन्द-माअन्द-मडु-विन्दु-सन्दोह-वाहिणा, भअणुज्जापेरन्त-मारुदेण उत्तम्मदि ।

---

(न) अतिदुष्करं करोति ।

(प) सखि ! आत्मनः कारणात्तस्य सर्वलोकालङ्कारभूतस्य, किमपि आशङ्क-मानया भगवत्या भीतायितास्मि, तत् किमिदानीमत्र प्रतिपत्स्ये ।

(फ) भगवती, एवं वादिनी इति आख्यायते, अस्माकमपि भर्तृदारिका, भवना-सन्नरथ्यामुहूर्त्तमण्डनस्य, तस्यैव बहुशोऽनुभूतदर्शना भूत्वा, रविकिरणाश्लिष्टमुग्ध-कमलिनीकन्दसुन्दरावयवशोभाविभावितानङ्गवेदनाधिकतररमणीयापि, परिजनं दुनोति नाभिनन्दति केलिकलाः, केवलं कमलायमानकान्तहस्तपर्य्यस्तगण्डमण्डला दिवसानि गमयति । अपिच । विकसितारविन्दमकरन्दमधुविन्दुसन्दोहवाहिना

जच्च तस्सिं जत्तादिअहे णिअमहूसवा-ब्भुदअ-दंसण-पडिअस्स-रूवस्स भअवदो कामस्स विअ, काम-काणणालङ्कार-आरिणो तस्स, विविह-बिब्भमाहिरामं, अणुरूआणुराआणुबन्ध-मह-ग्घीकिद-जोव्वणारम्भं अस्सोस्सदिट्टिविणिवाद-बच्चणावसर-खिज्ज-माणचित्त-तुवरन्त--कोदूहलं समुल्लसिद--सद्दस--स्थम्भ-मन्थरावअवपडिलग्ग-सेअ-पुलअ-उक्कम्प-सुन्दरं, आणन्दिद-सहीअणं पियसहीए परप्परावलोअणसुहं समासादिदं, तदो पहुदि, सविसेस-दूसहाआस-विजिम्भमाणुद्दामदेहदाह-दारुणं दसापरिणामं अणुभवन्ती, मुहुत्तमेत्तसम्पत्त-पुस्सचन्दोदआ वालकमलिणी विअ पम्मलाअदि ।

तहाविअ, मुहुत्तमेत्त-हिअअ-विणि-हिद-णिअ-बल्लह समागमा, निब्भर सलिलासार--सिच्चमाणिव्व मेइणी सीदलाअदित्ति जाणामि । जेण पप्फुरिद-कन्त दसण-छदुच्छलन्त-दन्त-मुत्तिआवलिकन्ति सविसेस-सोहिदं, निरन्तरुल्लसिद-पुलअ-पह्मल-कबोलघोलन्त-संददानन्द-बाहत्थ-बअं ईसि-बिअसिद-णिप्फन्द-मन्दतारुत्ताण-मसिणमउलाअन्त णेत्तणीलुप्पलं, अविरलुब्भिस्स सेअजलविन्दु सुन्दरललाटपट्टं णवचन्दलेहामणोहरं मुद्धमुहपुण्डरीअमुव्वहन्ती, बिअढ्ढ-सहअरीचित्त-संसद्द-कोमारभावा भोदि । किंअ । उद्दाम-ससिमउहणिउरुम्बचुम्बिदपउत्तिणीसन्दचन्दमणिहार-धारिणी

मदनोद्यानपर्य्यन्तमारुतेन उत्ताम्यति । यच्च तस्मिन् यात्रादिवसे, निजमहोत्स-वाभ्युदयदर्शनप्रतिपन्नरूपस्य भगवतः कामस्येव, कामकाननालङ्कारकारिणः तस्य, विविध-विभ्रमाभिराममनुरूपानुरागानुबन्धमहार्घीकृतयौवनारम्भमन्योन्यदृष्टिविनि-पातवञ्चनावसरखिद्यमानचित्तत्वरमाणकौतूहलं, समुल्लसितसाध्वसस्तम्भमन्थराव-

कप्पूर-पूरसविसेस सिसिर चन्दणरस च्छडा-सारणिअर-दन्तु-

---

यवप्रतिलग्नस्वेदपुलकोत्कम्पसुन्दरं, आनन्दितसखीजनं, प्रियसख्या परस्परावलोकनसुखं समासादितं, ततः प्रभृति, सविशेषदुःसहायासविजृम्भमाणोद्दामदेहदाहदारुणं दशापरिणाममनुभवन्ती मुहूर्तमात्रसम्प्राप्तपूर्णचन्द्रोदया बालकमलिनीव प्रम्लायति।

---

* अत्र एवंवादिनीत्यत्र कामावस्थां गुरुजने लज्जया वक्तुमनुचितमपि मालत्याः निमित्तं माधवावस्थाश्रवणात् सापि तन्निमित्तं सन्तप्ता जाता इति कथ्यत इति भावः। अस्माकं भर्तृदारिका परिजनं दुनोतीत्यन्वयः। आश्लिष्टं स्पृष्टम्। मुग्धो बालः। कन्दं बिसम्। बालकमलिनीमूलं मृदुतरं रविकरस्पर्शात् म्लानं च भवति। तदनेन दृष्टान्तेन निःसहत्वतनुत्वे अवयवानामुक्ते। तद्दशायामपि सौन्दर्य्यद्योतनाय सुन्दरपदम्। अधिकतररमणीयापीत्यनेन कामालिङ्गितकायस्य कान्तिप्रकर्ष उक्तः। अतएवापिर्विस्मये। अतिकान्तस्य सुखजनकत्वनैयत्येन दुःखजनकत्वे चित्रात्। दुःखप्रकारमाह। नाभिनन्दति इत्यादि। अत्र यत इत्यध्याहार्य्यम्। केलिः क्रीड़ा। कलाश्चतुःषष्टिः। यद्वा। केलीनां कला अंशमात्रम्। कथं तर्हि दिनानि गमयतीत्याह। केवलमित्यादि। कमलायमानं प्रसारितम्। इदं भरतानुमतम्। यदाह। अप्राप्ते च प्रिये कार्य्यः स्त्रीभिर्गण्डान्वितः करः॥ पर्य्यस्तं चित्रम्। निःस्पन्दः चरणम्। ईषदर्थे दराव्ययमित्यमरः। दलितं विकसितम्। माकन्दचूतः। पुष्पपरमत्र। माकन्दः सहकारेऽस्त्रीति मेदिनी। एतेन वायोस्त्रैगुण्यमुक्तम्। यत्र प्रियसख्या यावादिने तस्य दर्शनसुखं समासादितं तत आरभ्य सा कमलिनीव प्रम्लायतीत्यन्वयः। प्रतिपन्नरूपस्य कृतदेहपरिग्रहस्य। कामस्यानङ्गत्वात् पुरातनत्वाच्च। महोत्सवदर्शनार्थमिदमुक्तमिति भावः। विविधविलासैरभिरामम्। यद्वा। विविधभ्रमणमभिरामोऽभिरतिर्यत्र तत्। वञ्चना दर्शनाभावः। त्वरमाणं शीघ्रमुपजायमानम्। कथं पश्यामीति कुतुकं तयोश्चित्तेऽभवदित्याशयः। आनन्दितसखीजनं कामसम्पत्त्येति भावः। विजृम्भमाणो वर्द्धमानः। उद्दामो महान्। दारुणो भयङ्करः। मरणशङ्कयेति भावः। दशा कामावस्था। यथा क्षणमात्रप्राप्तचन्द्रोदया कमलिनी म्लायति तथा इयमपि प्राप्तपूर्णचन्द्रोदया म्लायति। चन्द्रकरमपि सोढुमक्षमेति भावः। यद्वा। यथा प्राप्तचन्द्रोदया पद्मिनी म्लायति तथा प्राप्तदर्शनसुखेयं म्लायतीत्यर्थः। ननु चन्द्रेण विरोधात्पद्मिन्या म्लानिर्युक्ता। अस्यास्तु माध-

रिदबालअकदलीवत्त संवाहणादि-व्वावारतुवरन्त सहअरी-सत्थविरइदोवणीद कमलिणीदल जलद्दासअणीए उण्णिद्दा, रअणीओ गमेदि।

---

तथापि च, मुहूर्त्तनावहृदयविनिहितनिजवल्लभसमागमा निर्भरसलिलासारसिच्यमानेव मेदिनी शीतलायत इति जानामि। वेगप्रस्फुरत्कान्तदशनच्छदोच्छलद्दन्तमौक्तिकावलिकान्तिसविशेषशोभितं, निरन्तरोल्लसितपुलकपक्ष्मलकपोलघूर्णमानसन्ततानन्दबाष्पस्तबकमीषद्विकसितनिष्पन्दतारोत्तानमसृणमुकुलायमाननेत्रनीलोत्पलं, अविरलोद्भिन्नखेदजलबिन्दुसुन्दरललाटपट्टं नवचन्द्ररेखामनोहरं, मुग्धमुखपुण्डरीकम् उद्वहन्ती विदग्धसहचरीचित्तसंशयितकौमारभावा भवति।

किञ्च। उद्दामशशिमयूखनिकुरुम्बचुम्बितप्रवृत्तनिस्यन्दचन्द्रमणिहारधारिणी, कर्पूरपूरसविशेषशिशिरचन्दनरसच्छटासारनिकारदन्तुरितबालकदलीपत्रसंवाहनादिव्यापारत्वरमाण-सहचरीसार्थविरचितोपनीतबालकमलिनीदलजलार्द्रशयनीये उन्निद्रा, रजनीर्गमयति।

---

चानुरागात्तद्दर्शने कथं म्लानिरिति। नैवम्। यथा शीतस्पर्शत्वेन चन्द्रः क्षणं पद्मिनीं सुखयति तथा माधवो मालतीमिति विवक्षितत्वात्। यद्वा। मुहूर्त्तपदेनेह प्रथमचन्द्रोदय उक्तः। एवं चाभिनवोदितं चन्द्रं रक्ततया सूर्याभं दृष्ट्वा भ्रान्त्या मुहूर्त्तं पद्मिनी तिष्ठत्यथ प्रम्लायति तथेयमपीत्यर्थः।

तथापि चेत्यत्रापि चेति भिन्नक्रमः। तथा शीतलायत इत्यपि जानामि चेति सम्बन्धः। निर्मायं मायारहितं सत्यमित्यर्थः। समागमेति भावनाबलादिति भावः। मेदिनी ग्रीष्मावसानकालीनेत्यर्थः। येन हृदिस्थकान्तसङ्गमेनैवं सा भवति तेन विदग्धसहचरीचित्तसंशयितकौमारभावा भवति। वैदग्ध्ययुक्ततया सहचरीभिरेवं संशय्यते यन्मत्परोचेऽपि प्रियसङ्गतेयम्। कथमन्यथैतादृक् संस्थानमस्या इति भावः। दशनच्छदमधरम्। उच्छलन् प्रकाशमानः। अधरस्फुरणं भावनार्पितप्रियतमचुम्बनात्। सुक्तिका मौक्तिकं सुक्तेति शब्दभेदः। निरन्तरेति। सङ्कल्पकृतवल्लभसमागमोद्भूतसात्त्विकभावेनेत्याशयः। घूर्णमानं लसमानम्। यद्यपि रोमाञ्चः सर्वाङ्गीण एव भवति तथापि रागातिशयद्योतनाय कपोलपुलक एव वर्ण्यते कविसंप्रदायेनेत्यवधेयम्। मन्दतारं किञ्चिच्चलतारकम्। उत्तानमूर्ध्व-

कधंवि उवलद्धणिद्दासुहा सेदपप्फुरिदपाद पल्लवुव्वन्त-पिण्डालत्तअरसा थरथराअन्त पीवरोरुमूलवास विसंवादिणीविवन्धना उक्खंडन्त हिअअन्तरुत्तरंगणीसास विसम-

---

कथमपि उपलब्धनिद्रासुखा स्वेदप्रसृतपादपल्लवोद्वान्तपिण्डालक्तकरसा, थरथरायमानपीवरोरुमूलवासविसंवादिनीविवन्धना, उत्खण्ड्यमानहृदयान्तरोत्त-

---

विस्तृतम् । भावनोपनीतप्रिये लज्जादिदृष्ट्याभ्यासोपदिक्मितत्वम् । निष्पन्दता मौग्ध्यात् । मन्दतारता नखदशनक्षतभावनया प्रियं प्रति सासूयत्वात् । उत्तानत्वं सुखदिदृक्षया । मसृणत्वं स्नेहभावनया । मुकुलत्वं रतावसानभावनया । यदाह । निश्चलत्वं तदा यातो मुकुलत्वं च लोचने ॥ उद्भिन्नमुद्गतम् । स्वेदेति । रतिश्रमादयं स्वेदः । तदनेन प्रबन्धेन हर्षिरुक्ता । यदाह । रोमाञ्चो वेपथुः स्वेदो लुलिते च विलोचने । लज्जन्त्या इव देहेषु चार्वि पुष्टमिदलक्षणम् ॥ तदिह यदीयं वल्लभसमागमं न जानाति तदा कथमधरस्पन्दादिमती स्यात् । कुमारस्य भावः कौमारं शैशवं तस्य भावोऽभिप्रायः कटाक्षविक्षेपादिः संश्रयितो यस्याः सा ।

निशाचेष्टामाह । किं चेति । निकुरम्बः । समूहः । चुम्बितेन चुम्बनेन प्रवृत्तनिःस्पन्दः सञ्जातचरणः । कुटा कुट इति यस्याः प्रसिद्धिः । दन्तुरितं विषमीकृतम् । संवाहनमर्पणम् । विरचितोपनीतं विरचनेनाङ्गदत्तम् । कर्पूरपूरपदे पूरः समूहः पूरणं वा । सविशेषपदेन शीतलकर्पूरसंस्पर्शादतिशीतलत्वमुक्तम् । कदलीपत्रस्य वालत्वेन शैत्यसौकुमार्ये उक्ते । कमलिनीदलेय जलार्द्रा आर्द्रवस्त्रं तच्छय्यायाम् । आर्द्रवस्त्रं जलार्द्रा स्यादिति हारावली ।

निद्रैव सुखं निद्रासुखम् । उद्वेगादिदुःखमयजागरविपर्ययरूपत्वादिदम् । निद्रेयं चिन्तावशात् । यदाह । दौर्बल्यालस्यचिन्ताद्यैर्निद्रा स्यात् कथयापि चेति । वल्लभसमागमसङ्कल्पजस्वेदेन प्रसृतचरणपल्लवेनोद्वान्तः पिण्डीभूतालक्तकरसो यस्याः सा । अलक्तकच्छलेनानुरागमिवोद्वमतीति भावः । अतिघनत्वार्थं पिण्डपदम् । थरथरायमानं कम्पमानम् । पीवरं महत् । विसंवादि स्खलितम् । प्रियस्योर्वाक्रमणभावनया प्रकम्पः । तदाकर्षणभावनया नीवीस्खलनम् । उत्खण्ड्यमानमुच्छलत् । उत्तरङ्गी यातायातवान् । विषमं यथा तथोच्छ्वसन् । पक्ष्मलः सरोमाञ्चः । वेष्टनं वेष्टः । इह

समूच्छसन्तपह्मल पओहरोवरिणिहित वेवन्त भुअलदा-वेट्ट बन्धणा झत्ति पडिबोध वेला विसज्जिदुव्विग्गदिट्ठि विणिवाद विसाद सुण्ण सअणिज्ज सञ्जादमोहमोलन्तलोअणा ससम्भम सहीअण पअत्तपडिवस मुच्छाविच्छेअसमअ संगलिद दीहणीसास सेस जीविदा, किंकादव्वदामूढदाए पढमपत्थिद णिअजीविदावसाणं दुव्वार देव्वविलसिदोबालम्भमेत्तव्वावारं अह्मारिसं जणं करेदि,

ता पेक्खदु भअवदी, इमेसु दाव लावण्ण भूइट्ठणि-म्माण परिविलवेसु अङ्गेसु दारुणविजिम्भिदस्स किअच्चिरं कुसलावसाणदा मम्महस्स भविस्सदि। कधं अ इमाइं

---

रङ्गनिश्वास विषमसमुच्छ्वसत्पक्ष्मलपयो-धरोपरिनिहित वेपमान भुजलतावेष्टबन्धना झटिति प्रतिबोधवेलाविसर्जितोद्विग्नदृष्टिविनिपातविज्ञातशून्यशयनीयसञ्जातमोह-मीलल्लोचना, ससम्भ्रमसखीजनप्रयत्नप्रतिपन्नमूर्च्छाविच्छेदसमयसङ्गलितदीर्घ-निश्वासशेषजीविता, किंकर्त्तव्यतामूढतया प्रथमप्रार्थितनिजजीवितावसानम् दुर्वारदैवविलसितोपालम्भमात्रव्यापारमस्मादृशं जनं करोति।

तत् प्रेक्षतां भगवती, एतेषु तावल्लावण्यभूयिष्ठनिर्माणपरिपेलवेषु अङ्गेषु दारुणविजृम्भितस्य कियच्चिरं कुशलावसानता मन्मथस्य भविष्यति। कथञ्च

---

हृदयोत्खण्डनादिकं प्रियसम्भोगव्यायामभावनया। उपरिवर्त्तिप्रियस्य भुजलता-बन्धनमालिङ्गनभावनया। प्रियप्राप्त्या प्रबुद्धा। प्रबोधश्च स्पर्शादिना भवति। मोहेति। शून्यशय्यादिदर्शनान्मूर्च्छितेत्यर्थः। ससंभ्रमः सादरः सावेगो वा। संगलितो निःसृतः। अनेन युगपन्नासापुटनिःसरणमाह। मूर्च्छाविच्छेदे तथैव श्वासप्रवृत्तिः। जीवितेति। मोहे सखीजनसेकादिना मूर्च्छापगमे दीर्घनिःश्वा-सेन जीवतीत्यवधार्यत इत्यर्थः। किंकर्त्तव्येति। जीविता सती किं करोमि इति न वेत्तीत्यर्थः। प्रथमेति। वयमेव प्रथमं म्रियामह इत्यर्थः।

स्वयमनध्यवसायाल्लवङ्गिका कामन्दकीं पृच्छति तस्मात् प्रेक्षतां भगवतीति। पेलवं कोमलम्। दारुणत्वं देहदाहादिकारित्वात्। इमानि विभावरीमुखानि

रमणकेलि कलह कोवोवराअ पल्लविअ केरली कवोल कोम-
लुव्वेल्लन्त विमल चन्द-चन्दिओद्दाम दलिदतिमिरावरणाइं
विहावरीमुहाइं । इमे अ उल्लसिद दुद्ध सिन्धु पूर धवलुज्जल-
जोह्लाजल प्पक्खालिद गअणांगणा, परिमलिद पाडलावउल-
णिम्महण बहल परिमलुग्गार सम्वलण मसिण मंसलाअन्त-
मलअ मारुदुद्धूमाविद दहदिहासुहा वसन्तरअणीपरिणाहा
अणत्थकारिणो भविस्सन्ति पिअसहीएत्ति * (फ) ।

काम । लवङ्गिके !

यदि तद्विषयोऽनुरागबन्धः स्फुटमेतद्धि फलं गुणज्ञतायाः ।
इति नन्दितमप्यवस्थयाऽस्या हृदयं दारुणया विदार्य्यते मे ॥
(१३)

---

इमानि रमणकेलिकलहकोपोपरागपल्लवितकेरलीकपोलकोमलोद्वेल्लद्विमलचन्द्र-चन्द्रिकोद्दामदलिततिमिरावरणानि विभावरीमुखानि । एते च उल्लसितदुग्ध-सिन्धुपूरधवलोज्ज्वलज्योत्स्नाजलप्रक्षालितगगनाङ्गणाः परिमलितपाटलावकुलनिर्म-थनबहलपरिमलोद्गारसंवलनमसृणमांसलायमानमलयमारुतोद्धूमायितदशदिङ्-मुखा वसन्तरजनीपरिणाहा अनर्थकारिणो भविष्यन्ति प्रियसख्या इति ।

---

प्रियसख्याः कथमेवं भविष्यन्तीत्यन्वयः । उपरागो लौहित्यम् । पल्लवितः पल्लवा-कारीकृतः । केरली केरलदेशस्त्री । तस्या अतिगौरत्वेन लौहित्यार्थं ग्रहणम् । उद्वेल्लन् पतन् । उद्दामदलितमतिदारितम् । इह रुष्टकेरलीकपोलसाम्येनो-दितचन्द्रेण तिमिरावरणनाशे रात्रेरुपक्रमः कथितस्तत्श्चन्द्रस्य दुःसहता मालत्या ध्वनिता । परिमलितं कृतम् । निर्मन्थनं मर्दनम् । उद्गार उद्गमः । संवलनं मिश्रीभावः । मसृणं मन्दम् । मांसलः पुष्टः । धूमायितं धूमैरिवाकुली-कृतम् । परिणाह आभोगः ।

(१३) यदीति । अनुरागबन्धः प्रेमभावः यदि तद्विषयः सविषयो यस्य स तादृशः स्यात् तदा एतद्धि निश्चये गुणज्ञतायाः फलं स्फुटमित्युत्प्रेक्षायाम् ।

माध। स्थानएव ह्रासो भगवत्याः।

काम। अहो! प्रमादः।

प्रकृतिललितमेतत्सौकुमार्य्यैकसारम्
वपुरयमपि सत्यं दारुणः पञ्चवाणः।
चलितमलयवातोद्धूतचूतप्रसूनः,
कथमयमपि कालश्चारुचन्द्रावतंसः॥ (१४)

लव। अस्सच्च, जाणिदं भोदु भअवदीए। एदं माहवपडिच्छन्दसणाहं चित्तफलअं। [मालत्याः स्तनांशुकमपनीय दर्शयति।] एसावि तस्सज्जेव्व सहत्थविरइदेत्ति कण्ठावलम्बिदा बउलमाला जीवणं पिअसहीएत्ति (व)।

माध। [सस्पृहं।]

जितमिव भुवने त्वया यदस्याः,
सखि वकुलावलि! वल्लभासि जाता।

---

(व) अन्यच्च, ज्ञातं भवतु भगवत्या। एतन्माधवप्रतिच्छन्दकसनाथं चित्रफलकम्। एषापि तस्यैव स्वहस्तविरचितेति कण्ठावलम्बिता वकुलमाला जीवनं प्रियसख्या इति।

---

इति नन्दितं आनन्दं प्रापितमपि मे मम हृदयं अस्या दारुणया अतिकठिनया अवस्थया विदार्य्यते, एतदवस्थां द्रष्टुं वयमपि तावत् न समर्था इति भावः।

(१४) प्रकृतीति। सौकुमार्य्यस्य सुकुमारताया एकसारं एकनिकेतनं प्रकृतिललितं स्वभावसुन्दरं एतत् वपुः। सत्यमयमपि पञ्चवाणः कामः दारुणः। चलितेन मलयवातेन उद्धूतानि उत्कम्पितानि चूतप्रसूनानि यस्मिन् स चारुः सुन्दरश्चन्द्र एवावतंस आभरणीभूतो यस्य सोऽयं कालोऽपि वर्त्तते इति शेषः। तेन कथमियं जीविष्यतीति भावः।

(१५) जितमिति। हे सखि! वकुलावलि! भुवने संसारे त्वयैव जितम्। भावे क्तः। परिणतविसकाण्डः परिपक्वमृणालदण्डस्तद्वत् पाण्डुः मुग्धः सुन्दरः

परिणतबिसकाण्डपाण्डुमुग्ध
स्तनपरिणाहविलासवैजयन्ती॥ (१५)

[ नेपथ्ये कलकलः। सर्वे आकर्णयन्ति। ]

[ पुनर्नेपथ्ये। ] रे रे सङ्करघराधिवासिणो जाणवदा! एसो क्खु जोव्वणारम्भ-गव्वसम्भरिद दुव्विसहामरिसरोस-व्वदिअर बलामोडिविहडिदुग्घाडिद-लोहपञ्जर-पड़िवद्धसिङ्खलाणिरोहपडिभङ्गसंङ्कलिदणिअ-लीलाविलास-पेरन्तुव्वेल्लन्तवहुत्तङ्गलङ्गूल-विअड-वेजअन्तिआ-डम्बरुद्दामसरीर—सण्णिवेसो, मडादो अवक्कमिअ. तक्खण-सतिह्लकवलिदाणेअदेहि-देहावयवसञ्झणिट्ठुर--अत्थि----खण्डटङ्कार--कडकडाअन्तकरवत्त--कठिणदाढ़ा-कराल-सुहकन्दरो, पअण्ड-वज्जणिग्घाददारुणच-

---

(अ) रे रे शङ्करगृहवासिनो जानपदा! एष खलु यौवनारम्भगर्वसंभृतदुर्विषहामर्षरोषव्यतिकरबलात्कार-विघटितोद्घाटितलोहपञ्जरप्रतिबद्धशृङ्खलानिरोधप्रतिभङ्गसङ्कलितनिजलीलाविलासपर्यन्तोद्वेल्लदुच्छलद्बहलोत्तुङ्गलाङ्गूलविकटवैजय-

---

यः स्तनपरिणाहः कुचविशालता तस्य विलासवैजयन्ती विलासपताकेव त्वं यद्वा यस्मादस्याः लाबल्याः वल्लभा जातासि। अत्रेर्षाख्यो व्यभिचारिभावो द्योत्यते। मालत्याश्लेषः तवैव जातः न ममेति। वयं तस्यान्वेषान्मधुकर! हतास्त्वं खलु कृतीति न्यायादिति भावः।

* अत्रैष व्याघ्रः कुद्दयमविलासं कुरुते। सर्वं भक्षयतीत्यर्थः। मठाच्छावाटिगृहान्निर्गत्य। कीदृशः। यौवनारम्भेण प्रवृद्धौ यौ दुःसहावचान्तिक्रोधौ तयोर्मिलनेन यो बलात्कारस्तेन विघटितं द्वयीकृतमुद्घाटितं मोटितं च यल्लोहपञ्जरं तत्र प्रतिबद्धशृङ्खलानिरोधप्रतिभङ्गो विपरीतभङ्गस्तेन सङ्कलिता मिलिता या निजलीला तद्विलासपर्यन्त उद्वेल्लन् कम्पमानोऽत एवोच्छलन्नूर्ध्वं गच्छन् यो बहलतुङ्गलाङ्गूलः स्थूलोच्छ्रितलाङ्गूलस्तस्य विस्तीर्णवैजयन्तिकासदृशप्रपञ्चेनोड्डामर उत्कटकठोरक्रियः शरीरसन्निवेशो यस्य सः। परगुणासहिष्णुता अमर्षः। रोषः क्रोधः। यद्वा। स्थिरः क्रोध एवामर्षः। यदाह। क्रोधः कृतापराधेषु स्थिरोऽमर्ष इति स्थितः। प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोध उच्यते॥ यद्वा।

वेडामोडण-कवलिदाणेअणरतुरङ्गजंगलुग्गारभरिदगलगुहागब्भगम्भीर-घग्घरोरल्लिगल्लूरणसद्द-संदब्भपडिरवा-भोअभीसिद-णट्टनिट्ठविदासेस-जणणिवहो, कठोरणहरकप्पर-क्कमणणिद्द-अदारिद-जन्तुगत्तावअवप्पउत्तरत्तकद्दमिदग इवहो दुट्ठसद्दूलो कुविअकिअन्तलीलाइदं करेदि। ता रक्खध जधासत्ति पिअसहीए मदअन्तिआए जीविदं त्ति। [प्रविश्य बुद्धरक्षिता सत्रासं।] परित्ताअध, एसा णो पिअसही अमच्चणन्दणस्स बहिणिआ मदअन्तिआ, एदिणा दुट्ठसद्दूलेण विणिहदविद्दाविअसेसपरिअणा अहिभवीअदि (भ)। *

---

न्तिकाडम्बरोद्दामशरीरसन्निवेशो मठादपक्रम्य, तत्‌क्षणसत्वणकवलितानेकदेहिदेहावयवसध्यनिष्ठुरास्थिखण्डटङ्कारकटकटायमानकरपत्रकठिनदंष्ट्राकरालमुखकन्दरः, प्रचण्डवज्रनिर्घातदारुणचपेटामोडनकवलितानेकनरतुरङ्गजाङ्गलोद्गारभरितगलगुहागर्भगम्भीरघर्घरोरल्लिगल्लूरण शब्दसन्दर्भप्रतिरवाभोगभीषितनष्टनिष्ठापिताशेषजननिवहः, कठोरनखरकर्पराक्रमणनिर्दयदारितजन्तुगात्रावयवप्रवृत्तरक्तकर्दमितगतिपथो, दुष्टशार्दूलः, कुपितकृतान्तलीलायित करोति। तद्रक्षत यथाशक्ति प्रियसख्या मदयन्तिकाया जीवितमिति। परित्रायध्वं, एषा नः प्रियसखी अमात्यनन्दनस्य भगिनी मदयन्तिका एतेन दुष्टशार्दूलेन विनिहतविद्रावितशेषपरिजना अभिभूयते।

---

अनर्थोऽचान्तिः। तत्‌क्षणं सत्वणं कवलिता येऽनेकप्राणिशरीरावयवास्तेषां मध्ये कठोराणि यान्यस्थीनि तेषां खण्डे खण्डने यष्टङ्कारो ध्वनिभेदस्तेन कटकटायमानाः करपत्रवत् कठिना या दंष्ट्रास्ताभिः करालो भीषणो मुखकन्दर आस्यकुहरं यस्य सः। टङ्कारेण दुर्भेद्यत्वमुक्तम्। दुर्भेद्यप्रवृत्तौ दन्तानां कटकटाशब्दकरणं स्वभावः। विस्तीर्णत्वात् कन्दर इव कन्दरः। प्रचण्डवज्रप्रहारदारुणो यश्चपेटः पाणितलप्रहारस्तेन यदामोड़नं चूर्णनं तेन कवलिता आस्वादिता येऽनेकनरास्तुरङ्गाश्च तेषां जाङ्गलं मांसं तस्योद्गारेण प्रपूरणेन भरितो यो गलगुहागर्भस्तत्र गम्भीरो घर्घरो दीर्घमधुरो य उरल्लिर्गलगर्जितं तेन यो गल्लूरणशब्दस्तस्य सन्दर्भेण समूहेन प्रतिरवाभोगः प्रतिशब्दविस्तारस्तेन भीषिता भयं नीता नष्टा विद्राणा

माल। लवङ्गिए! अहो प्पमादो। (म)

माध। [ससंभ्रममुत्थाय।] बुद्धरक्षिते!। कासौ।

माल। [दृष्ट्वा सहर्षसाध्वसं आत्मगतं।] अम्महे! एसोवि इहत्थो ज्जेव्व। (य)

माध। [स्वगतं।] हन्त! पुण्यवानस्मि, यदहमतर्कितोपनतदर्शनोल्लसितलोचनया अनया।

अविरलमिव दाम्ना पौण्डरीकेण नद्धः,
स्नपित इव च दुग्धस्रोतसा निर्भरेण।
कवलित इव कृत्स्नश्चक्षुषा स्फारितेन,
प्रसभममृतवर्षेणेव सान्द्रेण सिक्तः॥ (१६)

बुद्ध। महाभाअ! उज्जाण-बाहिरत्था-मुहे। (र)

[माधवः नाटीयं परिक्रामति।]

काम। वत्स! अप्रमत्तो भूत्वा विक्रमस्व।

---

(म) लवङ्गिके! अहो प्रमादः।
(य) आश्चर्यं एषोऽपि इहस्थ एव।
(र) महाभाग! उद्यानबाह्यरथ्यामुखे।

---

निद्रापितो निद्रापर्यन्तं लम्भितोऽशेषजननिवहो येन सः। कठोरनखकर्परा- क्रमणेन निर्दयं दारितं यज्जन्तुशरीरं ततः प्रवृत्तरक्तेन सञ्जातरुधिरेण कर्दमीकृतौ गतिपथौ गमनमार्गौ येन सः। कर्पर इव कर्परः। निम्नत्वात्। उल्लिखितगल- गर्जितमिति रत्नकोशः।

(१६) अविरलमिति। अहं पौण्डरीकेण पुण्डरीकसम्बन्धिना दाम्ना पाशेन अविरल मनवरतं नद्ध इव। निर्भरेण निरतिशयेन संसक्तेन वा दुग्धस्रोतसा पयःप्रवाहेण स्नपित इव। स्फारितेन आकर्णविश्रान्तेन चक्षुषा कृत्स्नः निःशेषोऽहं कवलितः कृतग्रास इव। सान्द्रेण घनेन अमृतवर्षेण सुधासारेण प्रसभं बलात् सिक्त इवास्मि। स्रोतसां निर्भरेण इति पाठान्तरे निर्झरेण प्रवाहेण इत्यर्थः।

माल। [जनान्तिकं।] लवङ्गिए! हद्धी! हद्धी! संसम्रो क्खु जादो। (ल) [सर्वास्त्वरितं परिक्रामन्ति।]

माध। [अग्रे दृष्ट्वा सबीभत्सं।] अहह!

संसक्तत्रुटितविवर्त्तितान्त्रजाल-
व्याकीर्णस्फुरदपवृत्तरुण्डखण्डः।
कीलालव्यतिकरगुल्फदघ्नपङ्कः
प्राचण्ड्यं वहति नखायुधस्य मार्गः॥ (१७)

अहो प्रमादः।

वयं बत विदूरतः क्रमगता पशोः कन्यका

सर्वाः। हा मदअन्तिए! (व)

[कामन्दकीमाधवौ सहर्षाकूतं।]

कथं तदभिपातितादविगतायुधः पूरुषात्।
कुतोऽपि मकरन्द एत्य सहसैव मध्ये स्थितः

इतराः। साहु, महाभाअ! साहु। (श)

---

(ल) लवङ्गिके! हा धिक्! हा धिक्! संशयः खलु जातः।

(व) हा मदयन्तिके।

(श) साधु महाभाग! साधु।

---

(१७) संसक्तेति। संसक्तेन परस्परसंलग्नेन त्रुटितेन विच्छिन्नेन विवर्त्तितेन उपर्य्युपरि तिर्य्यक् निपतितेन अन्त्रजालेन अन्त्रसमूहेन व्याकीर्णानां व्याप्तानां झटिति हतत्वात् स्फुरतां चलतां अपवृत्तानां अधोवदनानां रुण्डानां छिन्नशिरस्कानां खण्डा यस्मिन् सः। तथा कीलालव्यतिकरेण रक्तसम्पर्केण गुल्फदघ्नो गुल्फपरिमाणः पङ्को यस्मिन् सः नखा एवायुधा यस्य स व्याघ्रः तस्य मार्गः पन्थाः प्राचण्ड्यं भीषणत्वं वहति।

(१८) वयमिति। बत खेदे वयं विदूरतः अत्यन्तदूरे वर्त्तामहे इति शेषः। कन्यका मदयन्तिका पशोः व्याघ्रस्य क्रमगता आक्रमणं प्राप्ता। कथं तदभि-

कामन्दकीमाधवौ । [ सभयं । ]—दृढ़ञ्च पशुना हतः

इतराः । अच्चाहिदं ! अच्चाहिदं ! (ष)

कामन्दकीमाधवौ । [सहर्षं ।]—प्रमथितश्च दंष्ट्रायुधः ॥ (१८)

इतराः । [ सानन्दं । ] दिट्ठिआ परिहदं दुज्जादं । (स)

काम । [ साकूतं । ] कथं व्यालनखरप्रहारनिःसृतरक्तप्रवाहः, क्षितितलनिषक्तखड्गलतावष्टम्भनिश्चलः, संभ्रान्तमदयन्तिकावलम्बितः ताम्यतीव वत्सो मे मकरन्दः ।

इतराः । हद्धी ! हद्धी ! गाढप्पहारदाए किलम्मदि महाभाओ (ह) ।

माध । कथं प्रमुग्ध एव । [ कामन्दकीं प्रति । ] भगवति ! मां परित्रायस्व ।

काम । अतिकातरोऽसि । तदेहि तावत्पश्याव: ।

[ इति परिक्रम्य निष्क्रान्ताः सर्वे । ]

इति मालतीमाधवे शार्दूलविद्रावणो नाम तृतीयोऽङ्कः ।

---

(ष) अत्याहितमत्याहितम् ।

(स) दृष्ट्या प्रतिहतं दुर्जातम् ।

(ह) हा धिक् ! हा धिक् ! गाढ़प्रहारतया क्लाम्यति महाभागः ।

---

पातितात् तेन व्याघ्रेण अवपातितात् गृहीतात् कुतोऽपि पुरुषात् अधिगतायुधः प्राप्तखड्गः सहसैव एत्य आगत्य मकरन्दः मध्ये स्थितः । तथा दृढ़ं च यथा तथा पशुना व्याघ्रेण हतः ताड़ितः मकरन्द इति शेषः । दंष्ट्रायुधो व्याघ्रश्च प्रमथितो व्यापादितः ।

---

# चतुर्थोऽङ्कः ।

ततः प्रविशतो मदयन्तिकालवङ्गिकाभ्यामवलम्बितौ प्रमुग्धौ माधवमकरन्दौ, सम्भ्रान्ता कामन्दकी मालती बुद्धरक्षिता च ।

मद । पसीद भअवदि ! परित्ताहि परित्ताहि मदअन्तिआणिमित्त-संसइदजीविदं आवण्णजणाणुकम्पिणं महाभाअं (क) ।

इतराः । हद्धी ! हद्धी ! किं दाणिं अह्मेहिं एत्थ पेच्छिदव्वं । (ख)

कामन्दकी । [ उभौ कमण्डलूदकेन सिञ्चा । ] ननु भवत्यः पटाञ्चलेन वत्सौ वीजयन्तु ।

[ मालत्यादयस्तथा कुर्वन्ति । ]

मक । [ समाश्वस्यावलोक्य च । ] वयस्य ! कातरोऽसि, किमेतत्, ननु स्वस्थ एवास्मि ।

मद । [सहर्षं । ] अम्महे ! पडिबुद्धं दाणिं मअरन्द-पुण्णिमा-चन्देण (ग) ।

माल । [माधवस्य ललाटे हस्तं दत्त्वा । ] सहि लवङ्गिए ! दिट्ठिआ बढ्ढसि, णं भणामि, पडिबुद्धो ज्जेव्व दे पिअवस्सो, पडिवण्णचेअणो महाभाओ मअरन्दोत्ति (घ) ।

---

(क) प्रसीद भगवति ! परित्रायस्व, मदयन्तिकानिमित्तसंशयितजीवितमापन्नजनानुकम्पिनं महाभागम् ।

(ख) हा धिक् ! हा धिक् ! किमिदानीमस्माभिरिह प्रेक्षितव्यम् ।

(ग) आश्चर्यं ! प्रतिबुद्धमिदानीं मकरन्दपूर्णिमाचन्द्रेण ।

(घ) सखि लवङ्गिके ! दिष्ट्या वर्द्धसे ननु भणामि प्रतिबुद्ध एव ते प्रियवयस्यः प्रतिपन्नचेतनो महाभागो मकरन्द इति ।

माध। [आश्वस्य।] वयस्य! साहसिक! एह्येहि।

[इत्यालिङ्गति।]

काम। [उभौ शिरस्याघ्राय।*] दिष्ट्या जीवितवत्सास्मि।

इतराः। पिअं पिअं णो संवुत्तम्। (ङ)

[सर्वा हर्षं नाटयन्ति।]

बुद्ध। [जनान्तिकम्।] हला मदअन्तिए! एसो ज्जेव्व सो। † (च)

मद। तदा जेव्व जाणिदं मए, जहा एसो माहवो, अअंपि सो जणोत्ति ‡ (छ)।

बुद्ध। अवि, सच्चवादिणी अहम्?। (ज)

मद। ण क्खु, अम्हारिसेसु तुम्हारिसीओ पक्खवादिणीओ होन्ति। ¶ [माधवमवलोक्य।] सहि! मालदीए वि रमणीज्जो इमस्सिं महाणुहावे अणुराअप्पवादो (झ)।

---

(ङ) प्रियं प्रियं नः संवृत्तम्।

(च) सखि मदयन्तिके! एष एव सः।

(छ) तदैव ज्ञातं मया यथा एष माधवः अयमपि स जन इति।

(ज) अपि सत्यवादिनी अहम्।

(झ) न खलु अस्मादृशेषु युष्मादृश्यः पक्षपातिन्यो भवन्ति। सखि! मालत्या अपि रमणीय एवास्मिन् महानुभावेऽनुरागप्रवादः

---

* शिरस्याघ्राणमायुर्वर्द्धनायेति वृद्धाः।

† हलेति सखीसम्बोधनम्। मकरन्दनामाग्रहणेन स्वामित्वमभिप्रैति।

‡ सम्भावनायामपिशब्दः।

¶ न हि पक्षपातिन्यस्त्वादृश्यो मन्दं भद्रं वदन्तीति भावः।

[ पुनर्मकरन्दमेव सस्पृहमवलोकयति । ]

काम । [स्वगतम् । ] रमणीयोर्जितं * हि मदयन्तिकामकरन्दयोर्दैवादद्य दर्शनम् । [प्रकाशम् । ] वत्स मकरन्द ! कथं पुनरायुष्मानस्मिन्नवसरे मदयन्तिकाजीवितत्राणहेतोर्भगवता दैवेन सन्निधापितः ।

मक । अद्याहमन्तर्नगर एव काञ्चिद्वार्त्तामुपश्रुत्य, माधवस्य चित्तोद्वेगमधिकमाशङ्कमानस्त्वरितमवलोकितानिवेदितकुसुमाकरोद्यानवृत्तान्तः, परापतन्नेव शार्दूलावस्कन्दगोचरगतामेतामभिजातकन्यकामभ्युपपन्नवानस्मि ।

[ मालतीमाधवौ विम्रशतः † । ]

काम । [ स्वगतम् । ] वृत्तेन खलु मालतीप्रदानेन भवितव्यम् । [प्रकाशम् । ] वत्स माधव ! दिष्ट्या सुहृद्वृद्ध्या वर्द्धितोऽसि मालत्याः, तदयमवसरः प्रीतिदायस्य ‡ ।

माध । भगवति ! इयं हि ।

यद् व्यालव्रणितसुहृत्प्रमोहमुग्धं
सौजन्याद्विहितवती गतव्यथं माम्

---

* अक्लेशोपनतत्वेन रमणीयम् । शार्दूलनाशेन उपकारपूर्वकमुत्पन्नत्वादूर्जितं सातिशयम् । आयुष्मानिति वृद्धेन वाच्यो बालः शुभाशयः । इति भरतः ।

† उद्यानवृत्तान्तो मालतीप्रत्यक्षमुत्तरोपक्रमः । परापतन्नागच्छन् । अवस्कन्दोऽतिक्रमः । अभिजाता कुलीना । तथा चाभिजात्येन मदुपकारं ज्ञास्यतीति भावः । आभिजात्येन ज्ञानं च तथाविधाकारादिना । कन्यकेत्यत्रानुकम्पायां कन् । अभ्युपपत्तिः प्राप्तिः । विम्रशतः । परस्परक्लेशकारिण्याशङ्कयेति भावः ।

‡ प्रीतिदायस्य वर्धापकदानस्य ।

(१) यदयस्मात् व्यालेन हिंस्रजन्तुना व्रणितो यः सुहृत् बान्धवः तस्य यः

तत्कामं प्रभवति पूर्णपात्रवृत्त्या
स्वीकर्त्तुं मम हृदयञ्च जीवितञ्च ॥ १ ॥

लव । पडिच्छिदो क्खु णो पिअसहीए अअं पसादो (ञ)

मद । [स्वगतम्] जाणादि महाभाअधेओ जणो अवसरे गुरुअरमणिज्जं * मन्तिदुम् (ट) ।

माल । [स्वगतम् ।] किं णाम मअरन्देण उब्वेअकारणं सुदं भविस्सदि ? (ठ) ।

माध । वयस्य ! का पुनर्ममाधिकोद्वेगहेतुर्वार्त्ता † ?

[प्रविश्य पुरुषः ।] वत्स मदयन्तिके ! भ्राता ते ज्यायान् अमात्यनन्दनः समादिशति, अद्य परमेश्वरेण अस्मद्भवनमागत्य, भूरिवसोरुपरि परं विश्वासमस्मासु च प्रसादमाविष्कुर्वता, स्वयमेव प्रतिपादिता मालती, तदेहि सम्भावयामः प्रमोदमिति ‡ ।

---

(ञ) प्रतीष्टः खलु नः प्रियसख्या अयं प्रसादः ।

(ट) जानाति महाभागधेयो जनोऽवसरे गुरुकरमणीयं मन्त्रयितुम् ।

(ठ) किं नाम मकरन्देन उद्वेगकारणं श्रुतं भविष्यति ।

---

प्रमोदः तेन मुग्धं मूर्च्छितम् मां सौजन्यात् गतव्यथं व्यथाविहीनं विहितवती चकार, तत् तस्मात् पूर्णपात्रवृत्त्या यज्ञादौ देयभोज्यपूर्णपात्ररूपेण मम हृदयञ्च जीवितञ्च स्वीकर्त्तुमायत्तीकर्तुं कामं यथा तथा प्रभवति समर्था भवति ।

* गुरुकरमणीयं श्रीवसुखदम् ।

† मकरन्देन काञ्चिद्वार्त्तामुपश्रुत्येति यदुक्तमेतच्छङ्कमानः पृच्छति । वयस्येति ।

‡ ज्यायान् ज्येष्ठः । परमेश्वरो राजा । विश्वासम् अभेदम् । सम्भावयामः कारयामः । उत्सवपूर्वको हर्षः प्रमोदः ।

मक। वयस्य! सेयं वार्त्ता।

[ मालतीमाधवौ वैवर्ण्यं नाटयतः। ]

मद। [ मालतीं सहर्षमालिङ्ग्य। ] सहि मालदि! तुमं क्खु एक्कणअरणिवासेण सहपंसुकीलणादो पहुदि मे पिअसही आसि बहिणिआ अ, सम्पदं उण णो घरस्स मण्डणं जादासि (ड) *।

काम। वत्से मदयन्तिके! दिष्ट्या वर्द्धसे भ्रातुर्मालतीलाभेन।

मद। भअवदि! तुम्हाणं आसिसां पहावेण। लवङ्गिए! फलिदा णो मणोरहा तुम्हाणं लाहेण (ढ) †।

लवं। सहि! किं अह्माणम्पि अत्थि मन्तिदव्वं (ण)।

मद। सहि बुद्धरक्खिदे! दाणिं बिबाहमह्सवं सम्भावेह्म। (त)

बुद्ध। सहि! एहि गच्छह्म। (थ) [ इत्युत्तिष्ठतः। ]

---

(ड) सखि मालति! त्वं खलु एकनगरनिवासेन सहपांशुक्रीड़नात् प्रभृति मे प्रियसखी आसीर्भगिनिका च, साम्प्रतं पुनर्गृहस्य मण्डनं जातासि।

(ढ) युष्माकमाशीःप्रभावेण। सखि लवङ्गिके! फलिता नो मनोरथा युष्माकं लाभेन।

(ण) सखि! किमस्माकमप्यस्ति मन्त्रयितव्यम्।

(त) सखि बुद्धरचिते! इदानीं विवाहमहोत्सवं सम्भावयावः।

(थ) सखि! एहि गच्छावः।

---

* मद्भ्रातृवधूर्भविष्यसीति भावः।

† नोशब्दोऽस्माकमित्यर्थे निषेधे च तुल्यरूप इति निषेधोऽप्यत्र स्फुरति। अत एव सोत्कण्ठमाह। भ्रातुरित्यादि।

लव। [जनान्तिकम्।] भअवदि ! जहा एदे हिअअ-भरिदुव्भित्तविम्हआणन्द--सुन्दरा- दोलिद--धीरत्तण-मणोहरा, पहुत्थन्ति मदअन्तिआमअरन्दाणं दरदलिदणीलुप्पलदाम-सरिच्छा कडक्खविक्खेवा तह तक्केमि मणोरहणिव्वुत्तसम्बन्धा एदेत्ति। (द)

काम। [विहस्य।] ननु इमौ विलोकनेन मानसं मुहुर्मुहुः प्रमोदमनुभवतः।

तथाहि। ईषत्तिर्य्यग्वलितविषमं कुञ्चितप्रान्तमेतत्
प्रेमोद्भेदस्तिमितलुलितं किञ्चिदारेचितभ्रु।
अन्तर्मोदानुभवमसृणं स्तम्भनिष्कम्पपक्ष्म
व्यक्तं शंसत्यचिरमनयोर्दृष्टमाकेकराक्षम्॥ (१)

---

(द) भगवति ! यथैते हृदयभरितोद्वृत्तविस्मयानन्दसुन्दरान्दोलितधीरत्व-मनोहराः परिवर्त्तन्ते मदयन्तिकामकरन्दयोर्दरदलितनीलोत्पलदामसदृक्षाः कटाक्षविक्षेपाः तथा तर्कयामि मनोरथनिर्वृत्तसम्बन्धावेताविति।

---

(१) ईषदिति। ईषत् तिर्य्यक्वलितविषमं ईषत् अत्यल्पं तिर्य्यक्वलितेन विषमं किञ्चित् वङ्किमभावापन्नं कुञ्चितप्रान्तं कुञ्चितो मुद्रितः प्रान्तः प्रान्तभागो यस्य तत् प्रेमोद्भेदस्तिमितलुलितं प्रेमोद्भेदेन अनुरागोदयेन स्तिमितं निश्चलं स्थिरमित्यर्थः। अतएव लुलितं मनोहरमित्यर्थः। किञ्चिदारेचितभ्रु किञ्चि-दारेचिते उन्नमिते भ्रुवौ यत्र तत् नतभ्रुत्वमुचितं तदनयोर्नास्तीतिभावः। अन्त-र्मोदानुभवमसृणं अन्तर्मोदस्य आन्तरिकहर्षस्य अनुभवेन ज्ञानेन मसृणमुज्ज्वलं, स्तम्भनिष्कम्पपक्ष्म स्तम्भेन स्तम्भाख्यसात्त्विकभावेन निष्कम्पानि पक्ष्माणि यत्र तत् आकेकराक्षं आकेकरे (व्यारा) इति प्रसिद्धाख्ये अक्षीणि यत्र तत् अनयोर्युवक-युवत्योर्दृष्टं परस्परदर्शनं अचिरं झटिति व्यक्तं स्पष्टं मनोगतं प्रमोदं शंसति कथयतीवेति प्रतीयमानोत्प्रेक्षा। अनयोः परस्परदर्शनसुखपारवश्येन स्तम्भस्ति-मितत्वादिना सुखव्यञ्जकानुभवेन च प्रेमातिशय्यं ध्वन्यते।

पुरुषः। इतः इतः।

मद। सहि बुद्धरक्खिदे! अवि णाम पुणो वि दाव दीसइ एस जीविदप्पदो पुण्डरीअलोअणो? (ध)।

बुद्ध। जइ देव्वमणुकूलं भविस्सदित्ति। (न)

[पुरुषेण निष्क्रान्ते।]

माध। [अपवार्य्य।]

चिरादाध्यातन्तु त्रुटतु बिसिनीसूत्रभिदुरो,
महानाधिव्याधिर्निरवधिरिदानीं प्रसरतु।
प्रतिष्ठामव्याजं व्रजतु मयि पारिप्लवधुरा,
विधिः स्वास्थ्यं धत्तां, भवतु कृतकृत्यस्य मदनः॥ (३)

अथवा। समानप्रेमाणं जनमसुलभं प्रार्थितवतो,
विधौ वामारम्भे मम समुचितैषा परिणतिः।

---

(ध) सखि बुद्धरक्षिते! अपि पुनरपि द्रक्ष्यत एष जीवितप्रदः पुण्डरीकलोचनः।

(न) यदि दैवमनुकूलं भविष्यति।

---

(३) चिरादिति। बिसिनीसूत्रभिदुरो पद्मिनीतन्तुवत्भिदुरः भेदनस्वभावः चिराद्बहुदिनपर्य्यन्तं सञ्चित इत्यर्थः। आध्यातन्तुर्मालतीप्राप्त्याशालम्बनं त्रुटतु भिद्यताम्। इदानीम् अधुनैव महान् विपुलः भीषण इत्यर्थः। आधिव्याधिः मनोव्यथारूपरोगः निरवधिः अविच्छिन्नः सन् प्रसरतु प्रवाहरूपेण गच्छतु। पारिप्लवधुरा चाञ्चल्यकक्षा मयि अव्याजं अनायासेन प्रतिष्ठामाधिपत्यं व्रजतु प्राप्नोतु। विधिर्विधाता स्वास्थ्यं विश्रामं धत्तां कुरुताम्। मदनस्य कृतकृत्यः सफलो भवतु। एतत् सर्वं दुःखकरमपि मया तत् सोढुं शक्यते इति माधवाभिप्रायः। अन्यथा एतदुत्तरश्लोके स्वसिद्धान्तधीसन्निवेशवैफल्यप्रसक्तेः इत्यत एव सर्वत्र प्रार्थनायां लोट्।

तथाप्यस्मिन् दानश्रवणसमयेऽस्याः प्रविगल-
त्प्रभं प्रातश्चन्द्रद्युति वदनमन्तर्दहति माम्॥ (४)

काम। [ स्वगतम्। ] एवमतिदुर्मनायमानः पीड़यति मां वत्सो माधवो, वत्सा मालती च। दुष्करं निराशा प्राणिति। [ प्रकाशम्। ] पृच्छामि तावदायुष्मन्तं, अपि भवान् अमंस्त यथा भूरिवसुरेव मालतीमस्मभ्यं दास्यति ?।

माध। [ सलज्जम्। ] नहि नहि।

काम। न तर्हि प्रागवस्थायाः परिहीयसे ?

मक। भगवति ! दत्तपूर्वेत्याशङ्क्यते।

काम। जानामि तां खलु वार्त्तां, इदन्तु प्रसिद्धमेव, यथा नन्दनाय मालतीं प्रार्थयमानं भूरिवसुर्नृपतिमुक्तवान्, प्रभवति निजस्य कन्यकाजनस्य महाराज इति।

मक। अस्त्येतत्।

काम। अद्य च स्वयं राज्ञैव दत्ता मालतीति पुरुषेणा-वेदितं, तद्वत्स ! हृदि प्रतिष्ठानिबन्धनानि देहिनां व्यवहार-तन्त्राणि, वाचि पुण्यापुण्यहेतवो व्यवस्थिताः, सर्वञ्च वचना-नामायत्तं, सा च भूरिवसोर्वागनृतात्मिकैव, न खलु महा-

---

(४) समानेति। विधौ स्रष्टरि वामारम्भे प्रतिकूले सति असुलभं दुर्लभं जनं समानप्रेमाणं तुल्यप्रेमिकं प्रार्थितवती याचमानस्य मम एषा इति हर्षेन निर्देशः। परिणतिः दशापरिवर्त्तनं समुचिता युक्तैव। तथापि तादृशदशा-युक्तत्वेऽपि अस्मिन् दानश्रवणसमये अपरस्मै दानश्रवणकाले अस्याः प्रियस्याः प्रवि-गलत्प्रभं दीप्तिशून्यं प्रातश्चन्द्रद्युति प्रभातकालीनशशधरसमानशोभं वदनं मुखं मां अन्तर्दहति अन्तस्तापयति एतदेवैकं केवलमसह्यं जातमित्यर्थः। आदौ दुर्लभजनप्रार्थनैव अनुचिता, ततो विधौ तु प्रतिकूले अनुचिततरा दुर्लभजनप्रार्थ-नेति भावः।

राजस्य मालती निजा कन्यका, कन्याप्रदाने च नृपतयः प्रमाणमिति नैवंविधो धर्माचारसमयः, तस्माद्विमर्शितव्यमेतत्। कथञ्च, वत्स ! माम् अनवधानां मन्यसे। पश्य।

मा वा सपत्नेष्वपि नाम तद्भूत् पापं यदस्यां नु मया विशङ्कयम्।
तत्सर्वथा सङ्गमनाय यत्नः प्राणव्ययेनापि मया विधेयः॥ (५)

मक। सुष्ठु युज्यमानमादिश्यते युष्माभिः।

अपिच। दया वा, स्नेहो वा, भगवति ! निजेऽस्मिन् शिशुजने
भवत्याः संसाराद्विरतमपि चित्तं द्रवयति।
अतश्च प्रव्रज्यासमयसुलभाचारविमुखः,
प्रसक्तस्ते यत्नः प्रभवति पुनर्दैवमपरम्॥ (६)

---

(५) मेति। नु भो! अस्यां मालत्यां यत् पापं अनिष्टम् विवाहानिर्वाहे मरणरूपम् मया विशङ्क्यम् आशङ्क्यम्। तदनिष्टं सपत्नेषु शत्रुषु अपि किं पुनस्तादृशमहानुभावायाम् इत्यर्थः। माभूत् न भवतु। तत् तस्मात् सर्वथा सर्वप्रकारेण सङ्गमनाय परस्परसङ्घटनाय मया प्राणव्ययेनापि प्राणत्यागेनापि किं पुनः सामान्ययत्नसाध्यव्यापारविशेषेणेत्यर्थः। यत्नो विधेयः कार्य्यः। अत्र कैमुतिकन्यायेन तादृशार्थापत्त्या अर्थापत्तिरलङ्कारः।

(६) दयेति। हे भगवति। निजे आत्मीये अस्मिन् शिशुजने बालके माधवे मालत्यां च दया करुणा वा स्नेहो वात्सल्यं वा संसाराद्विरतमपि संसारस्थविषयकदम्बकानाकृष्टमपि तत्त्वज्ञानरतमपीत्यर्थः। भवत्याश्चित्तं द्रवयति आर्द्रीकरोति विषयाकृष्टं करोतीत्यर्थः। अतः कारणात् प्रव्रज्यासमयसुलभाचारविमुखः प्रव्रज्यासमये वानप्रस्थाश्रमकाले सुलभो य आचारः शौचादिकं अन्याश्रमापेक्षया वानप्रस्थाश्रमे आचारबाहुल्यसत्त्वादिति भावः। तस्माद्विमुखः स्खलितः ते तव यत्नः प्रसक्तः अविच्छिन्नः सन् प्रभवति। यत्ने कृते कार्य्यसिद्धिः अवश्यमेव भविष्यति। भवत्या यत्नात् यदि कार्य्यसिद्धिर्न भविष्यति तदा दैवमेव अत्र बलवत् इत्याशयेनाह। पुनः पक्षान्तरे अपरं दैवमेव प्रभवति। दैवाधीनं सर्वं कार्य्यमितिभावः।

[ नेपथ्ये । ] भअवदि कामन्दइ! एसा भट्टिणी विस्सवेदि. जधा मालदीं घेउण तुरिदमाअच्छदुत्ति (प)।

काम। वत्से ! उत्तिष्ठ। [ सर्वे उत्तिष्ठन्ति। ]

[ मालतीमाधवौ सकरुणानुरागमन्योन्यमवलोकयत: । ]

माध। [ स्वगतम् । ] कष्टमेतावती लोकयात्रा मालत्या समं माधवस्य, अहो नु खलु भोः।

सुहृदिव प्रकटय्य सुखप्रदः प्रथममेकरसामनुकूलताम्।
पुनरकाण्डविवर्त्तनदारुणो विधिरहो विशिनष्टि मनोरुजम् ॥७॥

माल। [ स्वगतम् । ] महाभाअ ! लोअणाणन्द ! एत्तिअं दिट्ठोसि। (फ)

लव। हद्धी ! हद्धी ! शरीरसंसअं जेव्व णो पिअसही आरोविदा अमच्चेण (ब)।

माल। [स्वगतम्] परिणदं दाणीं मे जीविदत्तिह्लाए फलम्।

---

(प) भगवति कामन्दकि ! एषा भट्टिनी विज्ञापयति यथा मालतीं गृहीत्वा त्वरितमागच्छतु इति ।

(फ) महाभाग लोचनानन्द ! एतावद्दृष्टोऽसि ।

(ब) हा धिक् हा धिक् शरीरसंशयमेव नः प्रियसखी आरोपिता अमात्येन।

---

(७) प्रथमम् आदौ एकरसां निरन्तरां अनुकूलतां आनुकूल्यं सुहृदिव बन्धुः इव प्रकटय्य प्रकाश्य सुखप्रदः सुखदादी अहो ! आश्चर्य्यम् विधिः पुनः पश्चात् अकाण्डे अकस्मात् यद्विवर्त्तनं दशापरिवर्त्तनं ममेतिशेषः तेन दारुणः कठिनः सन् मनसः चित्तस्य रुजम् व्यथां विशिनष्टि प्रसौति जनयतीत्यर्थः।

[सास्रम्।] णिव्वूढं अ णिक्करुणदाए तादस्सवि काबालिअत्तणं,पडिट्ठिदो दुट्टदेवस्स दारुणसमारम्भसरिसो परिणामो, कं एत्थ उवालहामि मन्दभाइणी, कं वा असरणा सरणं पडिवज्जामि (भ)।

लव। सहि इदो इदो (म) [इति निष्क्रामन्ति।]

माध। [स्वगतम्।] नूनमाश्वासनमात्रमेवैतत् माधवस्य सहजस्नेहकातरा करोति भगवती। [सोद्वेगम्।] हन्त सर्वथा संशयितजन्मसाफल्यः संवृत्तोऽस्मि, तत्किमिदानीं कर्त्तव्यम्। [विचिन्त्य।] न खलु महामांसविक्रयादन्यदुपायान्तरं पश्यामि। [प्रकाशम्।] वयस्य! मकरन्द! अपि भवान् उत्कण्ठते मदयन्तिकायाः?

मक। अथ किम्।

तन्मे मनः क्षिपति यत्सरसप्रहार-
मालोक्य मामगणितस्खलदुत्तरीया।

---

(भ) परिणतमिदानीं मे जीवितलृष्णायाः फलम्। निर्व्यूढं च निष्करुणतया तातस्यापि कापालिकत्वम्। प्रतिष्ठितो दुष्टदैवस्य दारुणसमारम्भसदृशः परिणामः। कमिहोपालभे मन्दभागिनी कं वा अशरणा शरणं प्रतिपद्ये।

(म) सखि! इत इतः।

---

(८) तदिति। सरसप्रहारं नूतनाघातयुक्तं माम् आलोक्य दृष्ट्वा, यद्यतोऽगणितस्खलदुत्तरीया स्खलदुत्तरीयमगणितं यया सा वस्त्रस्खलनमगणयन्ती मदयन्तिका इति यावत्। तथा वत्सैकहायनकुरङ्गविलोलदृष्टिः वत्सस्य आर्द्रान्नादिदर्शनादभीतस्य एकहायनस्य एकसंवत्सरस्य एकवर्षपरिमितायुःकालस्य-

त्रस्तैकहायनकुरङ्गविलोलदृष्टि-

राश्लिष्टवत्यमृतसंवलितैवाङ्गैः ॥ (८)

माध। सुलभैव बुद्धरक्षिता प्रियसखी भवतः।

अपिच। प्रमथ्य क्रव्यादं मरणसमये रक्षितवतः

परिष्वङ्गं लब्ध्वा तव, कथमिवान्यत्र रमताम्।

तथा च व्यापारः कमलनयनाया नयनयो-

स्त्वयि व्यक्तस्नेहस्तिमितरमणीयश्चिरमभूत् ॥ (९)

मक। तदुत्तिष्ठ पारासिन्धुसम्भेदमवगाह्य, (य) नगरीमेव प्रविशावः। [ उत्थाय। परिक्रामतः। ]

---

(य) पारा च सिन्धुश्च ते नद्यौ तयोः सम्भेदः सङ्गमः। अवगाह्य विलोड्य। स्नात्वेति यावत्। श्रमशान्तिहेतुतया महामांसादानहेतुतया च स्नानम्।

---

त्यर्थः। कुरङ्गस्य कुरङ्गशावकस्येत्यर्थः। विलोले चञ्चले दृष्टी इव दृष्टी नेत्रे यस्याः सा सती आदौ भयेन चपलं तत एकहायनस्य चपलतरत्वमित्यर्थः। अमृतसंवलितैः अमृतसिक्तैरिव अङ्गैः अवयवैर्मां आश्लिष्टवती आलिङ्गितवतीवेत्युत्प्रेक्षा ॥ एतेन तस्या मय्यनुरागाधिक्यसूचनात् ममौत्कण्ठा तत्र युक्तैव तत् तस्मात् मे मम मनः क्षिपति चञ्चलं करोतीत्यर्थः। अन्यथा कथमेतादृक् कष्टमित्यर्थः।

(९) प्रमथ्येति। क्रव्यं मांसमत्तीति क्रव्यादं व्याघ्रं प्रमथ्य विनाश्य मरणसमये मृत्युकाले रक्षितवतो रक्षितुस्तव परिष्वङ्गं आलिङ्गनं लब्ध्वा आलिङ्गनजन्यसुखमनुभूयेत्यर्थः। कथमिवातिकष्टेण अन्यत्र त्वद्भिन्ने जने रमतां नैव तादृशी अनुरागिणी एकवासक्ताऽन्यत्रात्मानमर्पयतीति भावः। आलिङ्गनमात्रत्वे कथमनुरागव्यञ्जनमित्याशङ्क्याह तथा चेति। कमलनयनायाः पङ्कजाक्ष्या नयनयोर्व्यापारः कटाक्षविक्षेपादिः त्वयि व्यक्तस्नेहस्तिमितरमणीयः व्यक्तः स्फुटः स्नेहो यत्र तथा स्तिमितः निश्चलः अतएव रमणीयः सुन्दरः चिरमनेकक्षणपर्यन्तं अभूत् जातः। एवंविधेन नयनव्यापारेण एकरसानुरागद्योतनं जायते। मदयन्तिकया साभिलाषम् आलोकितोऽसि इतिभावः।

माध। अयमसौ महानद्योः सम्भेदः य एषः (२)।

जलनिविडितवस्त्रव्यक्तनिम्नोन्नताभिः
परिगततटभूमिः स्नानमात्रोत्थिताभिः।
रुचिरकनककुम्भश्रीमदाभोगतुङ्ग-
स्तनविनिहितहस्तस्वस्तिकाभिर्वधूभिः॥ (१०)

[ इति निष्क्रान्ताः सर्वे। ]

चतुर्थोऽङ्कः समाप्तः।

---

(२) सम्भेदः सङ्गमः।

---

(१०) जलेति। स्नानमात्रोत्थिताभिः स्नानं कृत्वा उत्थिताभिरत एव जलनिविड़ितवस्त्रव्यक्तनिम्नोन्नताभिः जलेन निविड़ितं सिक्तमित्यर्थः यत् वस्त्रं तेन व्यक्तं लचितं निम्नमुन्नतञ्च स्थलमितिशेषः। यासां, ताभिः। रुचिरकनककुम्भश्रीमदाभोगतुङ्गस्तनविनिहित हस्तस्वस्तिकाभिः, रुचिरा मनोहराः कनककुम्भा हिरण्मय कलशा यासां ताः, आभुज्यन्ते इत्याभोगाः कर्मणि घङ्। उपभोगार्हा इत्यर्थः श्रीमन्तः सुकुमाराकारा ये तुङ्गा उन्नतपीवराः स्तना स्तेषु विनिहिता अर्पिता हस्ता एव स्वस्तिका यासां ताभिरिति सामानाधिकरण्यसमासः। अथवा रुचिरेत्यादिस्तनविशेषणं बोद्धव्यमित्यर्थः। वधूभिर्नारीभिः परिगततटभूमिः व्याप्ततीरभूभाग इत्यर्थः। सम्भेदो भवतीति पूर्वेण सम्बन्धः। नार्य्यश्च स्नानोत्तरकाले वाचे कलसमादाय सार्द्रवसना गृहमायान्तीति प्रसिद्धिः। अत्र उपमाद्वयस्य परस्परमर्थसम्बन्धप्रतीतिर्हेतुकत्वेन तस्य च हेतो रर्थगतत्वेन पदार्थहेतुकमलङ्कार इत्यनयो रङ्गाङ्गिभावः।

# पञ्चमोऽङ्कः ।

[ ततः प्रविशति आकाशयानेन श्रीमणीज्ज्वलवेशा कपालकुण्डला । ]

कपा । षडधिकदशनाडीचक्रमध्यस्थितात्मा,
हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः ।
अविचलितमनोभिः साधकैर्मृग्यमाणः,
स जयति परिणद्धः शक्तिभिः शक्तिनाथः ॥ (१)

इयमहम् इदानीं
नित्यं न्यस्तषडङ्गचक्रनिहितं हृत्पद्ममध्योदितम्,
पश्यन्ती शिवरूपिणं लयवशादात्मानमभ्यागता ।
नाडीनामुदयक्रमेण जगतः पञ्चामृताकर्षणा-
दप्राप्तोत्पतनश्रमा विघटयन्त्यग्रे नभोऽम्भोमुचः ॥ (२)

---

(१) षडिति । षडधिकदशनाडीचक्रमध्यस्थितात्मा षडधिका या दशनाड़ी षोड़शसंख्यकेत्यर्थः । वर्णनाभिहृत्कण्ठतालुभ्रुमध्यस्थिता षट्संख्यका नाड्यः । दशनाडीचक्रं यथा । इड़ा पिङ्गला सुषुम्णा गान्धारीहस्तिजिह्वा पूषायशालम्बुषा-कुहूशङ्खिन्यः । सैव चक्रं चक्राकारेण परिणममानमित्यर्थः । तस्य मध्ये स्थित आत्मा स्वरूपं यस्य सः । तथा तद्विदां तादृशात्मवेदिनामित्यर्थः । हृदि विनिहितरूपः आत्मज्ञाने हृदयैकवेद्य इत्यर्थः । यः सिद्धिदः भवति । अविचलितं विषयानाक्रान्तं मनो येषां तैः साधकैर्योगिभिर्मृग्यमाणः अन्विष्यमाणः । तथा शक्तिभिः ब्राह्म्याद्यष्टसंख्यकाभिः परिणद्धो व्यापृतः सन् स शक्तिनाथः शिवः जयति सर्वोत्कर्षेण वर्त्तते । यद्वा शक्तिभिः ज्ञानेच्छाप्रयत्नात्मिकाभिः परिणद्धः उपचितः शक्तीनाम् अणिमादीनां नाथः प्रभुः जयति । ब्राह्मी माहेश्वरीकौमारीवैष्णवी-वाराही माहेन्द्रीचामुण्डाचण्डिका इत्यष्टमातरः ।

(२) नित्यमिति । न्यस्तषड़ङ्गचक्रनिहितं न्यस्तानि मन्त्रन्यासक्रमेण अर्पितानि यानि षड़ङ्गानि हृदयशिरः शिखानेत्र कवचास्त्राणि तेषां चक्रे समुदाये निहितम् आरोपितं हृत्पद्ममध्योदितं हृदयपुण्डरीकान्तर्वासिनमित्यर्थः । शिवरूपिणं शिवात्मकं पश्यन्ती अन्तरिन्द्रियेण ज्ञात्वा अनन्तरं लयवशात् आत्मना सह वाह्येन्द्रियाणामैकी-

अपिच। उल्लोल-स्खलित-कपाल-कण्ठमाला-
सङ्घट्ट-क्वणित-कराल-कङ्किणीकः।
पर्य्याप्तं मयि रमणीयडामरत्वम्,
सन्धत्ते गगनतलप्रयाणवेगः॥ (३)

तथाहि।
विष्वग्वृत्तिर्जटानां प्रचलति निविडग्रन्थिनद्धोऽपि भारः,
संस्कारक्वाणदीर्घं पटु रटति क्वताव्रत्तिखट्टाङ्गघण्टा।

---

भावात् तद्गतचित्ततयेत्यर्थः आत्मानं आत्मस्वरूपं अभ्यागता विषयज्ञानस्यात्मज्ञाननाश्यत्वादिति भावः। नाड़ीनामिड़ापिङ्गलादीनां उदयक्रमेण वायुपूरणरीत्या जगतः पाञ्चभौतिकशरीरस्य पञ्चामृताकर्षणात् पञ्चामृतानां पृथिव्यप्तेजोवाय्वाकाशानां यदाकर्षणं तस्मात् अप्राप्तोत्पतनश्रमा अलब्धाकाशयानक्लेशा तथा अग्रे पुरोभागे नभोऽम्भोमुचः आकाशस्थमेघान् विघटयन्ती द्विधाकुर्वन्तीति यावत्। अहमस्मीत्यर्थः।

(३) उल्लोलेति। उल्लोलायाश्चलाया वेगवशादित्यर्थः। अतएव स्खलिताया भ्रष्टाया कपालकण्ठमालाया नृकपालरूपस्रज इत्यर्थः। सङ्घट्टेन परिमर्द्देन क्वणिता मुखरा सशब्देति यावत्। कराला भीषणा किङ्किणी क्षुद्रघण्टिका यस्मात् येनेति वा। तत्र क्वणितेत्यत्र कर्मणि क्तः। अपरत्र तारकादित्वादितच्प्रत्यय इतिभेदः। गगनतलप्रयाणवेगः आकाशोत्पतनजन्यवेगो मेत्यर्थः। मयि रमणीयडामरत्वं भीषणत्वं एकत्र कपालेनान्यत्र कपालस्खलनेन रमणीयत्वमित्यर्थः। पर्य्याप्तं निकामं सन्धत्ते जनयति। अत्रैकस्य कपालस्य पतनस्खलनाभ्यां विभावनाविशेषोक्तिरूपालङ्कारद्वयं व्यज्यते। कपालरूपकारणासत्वेऽपि भीषणत्वरूपकार्य्योत्पत्त्या विभावना तस्य च सत्वेऽपि भीषणत्वरूपकार्य्यानुत्पत्त्या विशेषोक्तिः। तच्चालङ्कारद्वयं कपालकण्ठमालेतिरूपकेण संसृज्यते इत्यलङ्कारत्रयस्य संसृष्टिः।

(४) विष्वगिति। निविड़ग्रन्थिनद्धोऽपि घनग्रन्थियुक्तोऽपि विष्वग्वृत्तिर्वातवेगात् स्खलितसंस्थानभेदः जटानां भारः जटाकलापः प्रचलति, क्वताव्रत्तिखट्टाङ्गघण्टा वारंवारं हन्यमानस्य खट्टाङ्गस्य वाद्यभेदस्य घण्टा संस्कारेण मार्जनादिनेत्युत्प्रेक्षा वेगाख्यसंस्कारेण वा। यः क्वाणः स्वनः तेन दीर्घमधिकं

ऊर्ध्वं धूनोति वायुर्विवृतशवशिरःश्रेणिकुञ्जेषु गुञ्ज-
न्नुत्तालः किङ्किणीनामनवरतरणत्कारहेतुः पताकाम्॥ (४)

[ परिक्रम्यावलोक्य च गन्धमाघ्राय । ] इदं तावत्पुराण-निम्बतैलाक्तपरिभृज्यमानरसोनगन्धिभिश्चिताधूमैः पुरस्ताद्विभावितस्य महतः श्मशानवाटस्य नेदीयः करालायतनं, यत्र पर्य्यवसितमन्त्रसाधनस्य अस्मद्गुरोः अघोरघण्टस्य आज्ञया सविशेषमद्य पूजासम्भारो मया सन्निधापनीयः, कथितञ्च मे गुरुणा, वत्से कपालकुण्डले ! अद्य मया भगवत्याः करालायाः प्रागुपयाचितं स्त्रीरत्नमुपहर्त्तव्यम् । तदत्रैव नगरे विदितमास्त इति तद्विचिनोमि । [सकौतुकमग्रेऽवलोक्य । ] तत्कोऽयमतिगम्भीरमधुराकृतिः उत्तम्भितकुटिलकुन्तलः, कृपाणपाणिः श्मशानवाटमवतरति ? य एषः । ( ५ )

---

पटु च तीव्रं यथा भवति तथा रटति शब्दायते । तथा उत्तालः करालः किङ्किणीनां क्षुद्रघण्टिकाविशेषाणां अनवरतरणत्कारहेतुर्निरन्तरनिनादकारणं अतएव विवृतानि स्तूपीकृतानि बहुलानीत्यर्थः, यानि शवशिरांसि मृतमस्तकास्तेषां श्रेणय एव कुञ्जानि लताद्याच्छादितवनविभागास्तेषु गुञ्जन् रवं कुर्वन् वायुः पवनः पताकां स्वहस्तहृतध्वजं ऊर्द्ध्वं धूनोति कम्पयति वायुवेगवशेनोर्द्धभागे पताका कम्पते इति यावत् । अत्र शवशिरःश्रेण्यां तत् साहश्याक्षेपान्निदर्शना सा चोत्प्रेक्षया व्यज्यते ।

(५) पुराणमनभिनवं यन्निम्बतैलं तेनाक्तानां मर्दितानां परिभृज्यमानानां भाजनीकृतानां क्वथितानामिति यावत् । शवानां रसः देहस्थधात्वादिः तेन ऊनो हीनः निकृष्ट इति यावत् । अथवा भृज्यमानं यद्रसनं लशुनं तस्य गन्ध इव गन्धो यस्य विद्यते तैस्तद्युक्तैरत्र गन्धशब्दादुत्तरे मत्वर्थीय इनिप्रत्ययः । वध्यते वेध्यतेऽनेनेति वाटः । हलश्चेति घञ् । पन्था वाटः पथो माघ इति भागुरिः । नेदीयो निकटम् । पर्य्यवसितं समाप्तं मन्त्रसाधनं पुरश्चरणजपादि यस्य । सम्भारः समूहः । उपयाचितं मनीषितार्थं स्वीकृतम् । यद्दीयते तु देवेभ्यो मनोराज्यस्य सिद्धये । उपयाचितकं तत्तु दोहदं सम्प्रचक्षत इति हारावली । स्त्रीरत्नमिति । जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्षत इति

कुवलयदलश्यामोऽप्यङ्गं दधत्परिधूसरम्,
ललितचरणन्यासः श्रीमान्मृगाङ्कनिभाननः।
हरति विनयं वामो यस्य प्रकाशितसाहसः
प्रविगलदसृक्पङ्कः पाणिर्ललन्नरजाङ्गलः॥ (६)

[निरूप्य।] अये! स एष कामन्दकीसुहृत्पुत्रो महामांसस्य पणयिता माधवः। तत्किमनेन, भवतु समीहितं सम्पादयामि विगलितप्रायश्च पश्चिमसन्ध्यासमयः।

तथाहि सम्प्रति।

व्योम्नस्तापिञ्छगुच्छावलिभिरिव तमोवल्लरीभिर्व्रियन्ते
पर्य्यन्ताः प्रान्तवृत्त्या पयसि वसुमती नूतने मज्जतीव।

---

विश्वः। विदितमुपलब्धम्। विचितमिति पाठेऽन्विष्टम्। गम्भीरेत्यादि। विकाराः सहजा यस्य हर्षक्रोधभयादिषु। भावेषु नोपलभ्यन्ते तद्गाम्भीर्य्यमुदाहृतम्॥ इति। अभ्यासात् करणानां तु श्लिष्टत्वमुपजायते। महत्स्वपि विकारेषु तन्माधुर्य्यमुदाहृतम्॥ इति भरतः। उत्तम्भितो जूटाकारेण बद्धः कुटिलो वक्रः कुन्तलः केशो यस्य सः। एतेन रौद्ररसवत्तोक्ता।

(६) कुवलयेति। कुवलयदलश्यामः नीलकमलदलस्निग्धश्यामोऽपि परिधूसरं धूसरवर्णं अङ्गं दधत् दधानः। श्मशानादौ पतनात् धूसरत्वम्। ललितः सुन्दरः चरणन्यासः पादक्षेपः यस्य सः। श्रीमान् सुन्दरः मृगाङ्कनिभाननः चन्द्राननः। ललत् चञ्चलं नरजाङ्गलं महामांसं यत्र सः तथा प्रविगलदसृक्पङ्कः। प्रविगलन्ति गलितानि असृञ्जि रक्तानि पङ्कानि इव यस्मात् स स्रवद्रुधिरपङ्किल इति यावत् अतएव प्रकाशितसाहसः स्फुरत्साहसलक्षणः यस्य माधवस्य वामः सव्येतरः प्रतिकूलश्च पाणिः करः विनयं माधवनिष्ठस्वाभाविकविनयगुणं हरति गृह्णाति। एतादृशहस्तदर्शने भीतिरेव जायते सुतरां विनयशालित्वं नास्ति हस्तस्येति भावः। अत्र सुन्दरोऽप्यसुन्दर इत्याद्यर्थसद्भावादर्थापत्तिरलङ्कारः।

(७) व्योम्न इति। व्योम्नः पर्य्यन्ता आकाशसीमानः तापिञ्छानां तालतरूणां गुच्छावलिभिर्घनश्रेणिभिरिव न तु तदित्यर्थः तदपेक्षया निविड़ाकारत्वमन्धकारस्येति भावः। तमोवल्लरीभिस्तमःपटलैर्व्रियन्ते कर्मणि लट्। अनन्तरं

वात्यासंवेगविष्वग्विततवलयितस्फीतधूम्याप्रकाशम्
प्रारम्भेऽपि त्रियामा तरुणयति निजं नीलिमानं वनेषु ॥७

परिक्रम्य निष्क्रान्ता विष्कम्भकः ।

ततः प्रविशति यथानिर्दिष्टो माधवः ।

माध । [साशंसम् । ]
प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।
यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणात्
आशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रोदयः ॥ (८)

---

वसुमती पृथिवी प्रान्तदृश्वा प्रान्तभागसहिता सहार्थे तृतीया । गम्यमानेऽपि तदर्थप्रसङ्गात् वृद्धोयूनेति वत् गौणप्रयोग इत्यादि कैयटादयः । नूतने सद्यः-प्रवृत्ते पयसि जले मज्जतीव निमग्नेव । त्रियामा रजनी प्रारम्भेऽपि प्रदोषकाले सायमपीत्यर्थः । वात्यायाः संवेगेन विष्वक् समन्तात् वितता विस्तारिता वलयिता वलयाकारा स्फीता गभीरा या धूम्या धूमसमूहो नीहारो वा तत्सदृशं अप्रकाशं प्रकाशरहितं तेजोरहितमिति यावत् । तेजः सामान्या-भाव मन्धकारं वदन्ति नैयायिकाः । निजं स्वीयं नीलिमानं नीलत्वं पृथ्वा-दित्वादिमनिज्वक्तव्य इतीमनिच् प्रत्ययः । वनेषु तरुणयति गाढं करोति उक्तविशेषणदर्शनात् सायं निशीथभमो जायत इति भ्रान्तिमदलङ्कारः ।

(८) प्रेमार्द्रा इति । प्रेमार्द्राः प्रेमसहिता अतएव प्रणयस्पृशः अनुराग-भाजः परिचयात् परिचयजनितविश्वासात् उद्गाढरागोदया उद्भिन्नानुराग-चिह्नास्ता ताः पूर्वकृता इत्यर्थः । निसर्गमधुराः स्वभावसुन्दरा मुग्धदृशो मालत्याः चेष्टा भावहावादयः मयि भवेयुः इत्याशंसा । आशंसया सन्देहेन परिकल्पि-तासु भावितास्वपि यासु चेष्टासु अन्तःकरणस्य अन्तरिन्द्रियस्य बाह्यकरणव्यापार-रोधी बाह्येन्द्रियव्यापारनिरोधकः आनन्दसान्द्रोदयः सान्द्रो गाढोदय आनन्दः कर्मधारये उभयस्यापि प्राङ्निपातशक्तत्वेनात्र आनन्दस्य तथात्वं वैकल्पिकत्वात्त-स्येति भावः । तस्योदयः प्रकाशः क्षणाद्‌ भवति । तद्गतचित्ततया मालती-मयं संसारं पश्यामि इतोऽन्यत् न किमप्यस्तीति भावः । अत्र पूर्वानुभूतचेष्टादि-स्मरणात् स्मरणालङ्कारः ।

किञ्च । अतिमुक्तमदग्रथितकेशरावली-
सतताधिवाससुभगार्पितस्तनम् ।
अपि कर्णजाहविनिवेशिताननः
प्रियया तदङ्गपरिवृत्तमाप्नुयाम् ॥ (९)

अथवा । दूरे तावदेतत् इदमेव प्रार्थये ।

सम्भूयेव सुखानि चेतसि परं भूमानमातन्वते,
यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः ।
यद् बालेन्दुकलोच्चयादवचितैः सारैरिवोत्पादितम्,
तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम् ॥ (१०)

यत्सत्यमधुना तत्सन्दर्शनेनातिखल्पोऽपि न विशेषः ।

---

(९) अतीति । अतिमुक्ताया अटाया मुक्तारहितायाश्च मद्ग्रथिताया उभयत्र संष्ठु निर्मिताया: केशरावल्या हारभेदस्य मालायाश्च यः सतताधिवासः देहे नियतावस्थानं अन्यत्र यः गाढ़परिमलः तेन सुभगं यथा भवति तथा उभयत्रैव रमणीयमित्यर्थः । अर्पितस्तनं न्यस्तकुचं तस्याः अङ्गपरिवृत्तं अङ्गस्य परिवर्त्तनं एकत्र काश्मीरादिनाऽन्यत्र पार्श्वपरिवर्त्तनं अहं कर्णजाहे कर्णमूले विनिवेशिताननः न्यस्तमुखः सन् प्रियया सह आप्नुयां लभेयं ममापि तद् भवतु इत्यर्थः । प्रियाकर्णमूले मुखं न्यस्य तदङ्गपरिवर्त्तनजन्यसुखदुःखोभयविधाकारमखण्डरसं अनुभविष्यामीति भावः ।

(१०) सम्भूयेति । सुखानि कर्त्तृणि सम्भूयेव मिलित्वेव चेतसि मदन्तःकरणे परं भूमानं अतिशयाधिक्यं परमिति क्रियाविशेषणं वा आतन्वते कुर्वन्ति । मनसि महान् सुखोदयो जायते इत्यर्थः । यत्र जने मालतीरूपे आलोकपथावतारिणि दर्शनपथे वर्त्तमाने दृष्टे इति यावत् नेत्रोत्सवः तद्दर्शनजन्यनयनस्फुरणं रतिमनुरागं प्रस्तौति व्याहरति । बालेन्दुकलोच्चयात् नवविधुकलासमूहादित्युत्प्रेक्षा, एतेन मालत्याः सर्वाङ्गीनसौष्ठवत्वमुक्तम् । अवचितैः गृहीतैः सारैः सारांशैः उत्पादितं विरचितमिव, अनङ्गमङ्गलगृहं मदनमनोहरावासगृहमिव स्थितमित्यर्थः । यत् तस्याः प्रेयस्या मुखं तत् पश्येयं द्रक्ष्यामीत्याशंसा ।

मम हि सम्प्रति सातिशयप्राक्तनोपलम्भसम्भावितात्मजन्मनः संस्कारस्यानवरतप्रबोधात्प्रतायमानस्तद्विसदृशप्रत्ययान्तरैः अतिरस्कृतप्रवाहः, प्रियतमास्मृतिप्रत्ययोत्पत्तिसन्तानः तन्मयमिव करोति अन्तर्वृत्तिसारूप्यतश्चैतन्यम्। * तथाहि।

लीनेव प्रतिबिम्बितेव, लिखितेवोत्कीर्णरूपेव च,
प्रत्युप्तेव च, वज्रलेपघटितेवान्तर्निखातेव च।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-
श्चिन्तासन्ततितन्तुजालनिविड़स्यूतेव लग्ना प्रिया॥ (११)

[ नेपथ्ये कलकलः। ]

---

* मानसमौत्सुक्यातिशयमाह। मम हीति। मामकीनः प्रियास्मरणरूपज्ञानोत्पत्तिः सन्तानः परिणतिसमूहः स्मृतिरूप एव मम चैतन्यमात्मतत्त्वं तन्मयमिव करोति मालतीमयं करोतीत्यर्थः। कीदृशः। प्रतायमानो दीर्घीभवन्। अत्र हेतुः। संस्कारस्य भावनाया अतिशयितप्रबोधादुद्रेकात्। कीदृशस्य संस्कारस्य। सातिशयात्सादरात् स्फुटाकाराद्वा वकुलवीथ्यां पूर्वकालानुभवाल्लब्धजन्मनः। प्रतायमानत्वमेवोपपादयति। तद्विसदृशैर्मालतीविलक्षणविषयैर्ज्ञानान्तरैः अतिरस्कृतप्रवृत्तिः। तथा चान्तरा विषयान्तरास्फुरणान्न प्रवाहतिरस्कार इति भावः। नन्वात्मतत्त्वस्य पुष्करपलाशवन्निर्लेपतया कथं मालतीमयत्वमत आह। अन्तरिति। अन्तःपदमिह बुद्धितत्त्वपरम्। तथाच बुद्धितत्त्वस्य या प्रवृत्तिः सहजसिद्धो व्यापारः सा यत आत्मतत्त्वे भेदाग्रहात् प्रतिभासते तस्मात्। सांख्यदर्शने बुद्धेर्भोक्तृत्वात्। यद्वा। अन्तर्वृत्तिरिति भावप्रधानम्। तथा चान्तर्वृत्तित्वमन्तरवस्थानरूपं सारूप्यं सादृश्यमात्मबुद्ध्योस्तस्मात्।

(११) लीनेवेति। सा प्रिया मालती नोऽस्माकं चेतसि लीनेव प्रतिबिम्बितेव, लिखितेव मुद्रितेव उत्कीर्णरूपेव, उत्चित्रेव, बहिरानीतेव, प्रत्युप्तेव प्रोथितेव वज्रलेपेन घटितेव सम्पादितेव अन्तरन्तःकरणे निखातेव चेतोभुवः कामस्य पञ्चभिर्विशिखैर्बाणैः कीलितेव विद्धेव तथा चिन्तासन्ततिश्चिन्ताप्रवाहः, सैव तन्तुजालं तन्तुसमूह उपादानकारणमित्यर्थः तेन निविड़ं घनं यथा भवति तथा स्यूतेव रचितेव।

माध। अहो! सम्प्रति प्रगल्भमानकौणपनिकायस्य महती श्मशानवाटस्य रौद्रता। अस्मिन् हि

पर्य्यन्तप्रतिरोधिमेदुरचयस्त्यानं चिताज्योतिषा-
मौज्ज्वल्यं परभागत: प्रकटयत्याभोगभीमं तम:।
संसक्ताकुलकेलय: किलकिलाकोलाहलै: सम्मदा-
दुत्ताला: कटपूतनाप्रभृतय: सांराविणं कुर्वते॥ (१२)

भवतु आघोषयामि तावत्। भो! भो: श्मशाननिकेतना: कट-पूतना:!

अशस्त्रपूतमव्याजं पुरुषाङ्गोपकल्पितम्।
विक्रीयते महामांसं, गृह्यतां गृह्यतामिदम्॥ (१३)

[ पुनर्नेपथ्ये कलकल:। ]

माध। कथमाघोषणानन्तरमेव सर्वत: समुच्चलदुत्ताल-वेतालसुत्ततुमुलाव्यक्तकलकलाकुल: प्रचलित इवाविर्भवद्भूत-सङ्कट: श्मशानवाट:। आश्चर्य्यम्!

---

(१२) पर्य्यन्तेति। पर्य्यन्तप्रतिरोधिभि: सीमावरकै: मेदुरचयै: मांसलसङ्घै: स्त्यानं स्फीतं चिताज्योतिषां चितानलानामौज्ज्वल्यं कर्त्तृ परभागत: गुणोत्कर्षात् आभोगभीमं आभोगेन इयत्ता भीमं करालं तम: कर्म प्रकटयति, तथा किलकिला-कोलाहलै: (किलकिलेत्यनुकरणशब्दै) तद्रूपचीत्कारै: उत्ताला उत्तरङ्गा भीमा इत्यर्थ:। संसक्ताकुलकेलय: सञ्जातचपलक्रीड़ा: कटपूतनाप्रभृतय: शवश्मशान-वासिप्रभृतय: सांराविणं सम्यक् भीषणशब्दं कुर्वते जनयन्ति।

(१३) अशस्त्रेति। अशस्त्रपूतं शस्त्रैरनाविद्धं अव्याजं सुन्दरं पुरुषाङ्गोप-कल्पितं पुरुषाङ्गेन सम्पादितं इदं महामांसं तुच्छमांसमित्यर्थ:। मालतीमन्तरेण स्वशरीरधारणे फलाभावात् तुच्छत्वमितिभाव:। तैले घृते तथा मांसे महच्छब्दो न दीयते इत्यनुशासनादिति। विक्रीयते दीयते तद्गृह्यतां अभीक्ष्णं गृह्यतामित्यर्थ:। इष्टसिद्धिं पणीकृत्य साहसात् यदुपार्जितम्। अशस्त्रपूतं निर्व्याजमेतत् मांसं विदुर्बुधा:। इति परिभाषितमेव मांसं महामांसम्।

कर्णाभ्यर्णविदीर्णसृक्कविकटव्यादानदीप्ताग्निभि-
र्दंष्ट्राकोटिविसङ्कटैरित इतो धावद्भिराकीर्य्यते ।
विद्युत्पुञ्जनिकाशकेशनयनभ्रूश्मश्रुजालैर्नभो,
लक्ष्यालक्ष्यविशुष्कदीर्घवपुषामुल्कामुखानां मुखैः ॥(१४)

अपि च * । एतत्पूतनचक्रमक्रमकृतग्रासार्द्धभुक्तैर्वृकान्
उत्पुष्णात् परितो नृमांसविघसैराघर्घरं क्रन्दतः ।

---

(१४) कर्णेत्यादि । उल्का ज्वाला मुखे येषां ते उल्कामुखाः शृगालभेदाः । तेषां मुखैर्नभ आकीर्य्यते व्याप्यते । यद्वा । उल्कामुखा एतन्नामप्रसिद्धा एव रणवासिनो जन्तुभेदाः । कीदृशैः । कर्णाभ्यर्णे कर्णसमीपे विदीर्णसृक्कभ्यां विकटं करालं यद्व्यादानमास्यविकाशस्तेन दीप्तोऽग्निर्येषु तैः । दंष्ट्राणां कोटिभिरग्रैर्विसङ्कटैः सङ्कुलैर्विकरालैर्वा । इतः इतः सर्वतो धावद्भिः । विद्युत्पुञ्जनिकाशानि तडित्समूहतुल्यानि केशनयनभ्रूश्मश्रुजालानि यत्र तैः । पिङ्गलत्वात् केशादीनां विद्युत्तुल्यता । अतएवोल्कामुखः शृगालान्यो जन्तुभेद इति पक्षः साधीयान् । उल्काप्रकाशाल्लक्ष्याणि अन्यदा अलक्ष्याणि विशुष्काणि दुर्बलानि दीर्घाणि वपूंषि येषां तेषाम् । एतेन दुर्बलत्वमुक्तम् । प्रान्तावोष्ठस्य सृक्कणी इत्यमरः । केशेत्यादौ पूर्वनिपातविधेरनित्यत्वाद् भ्रूशब्दमपहाय केशशब्दस्य पूर्वनिपातः । लक्ष्यशब्दो ण्यति यकारवान् । कर्मणि घञि तद्रहित इत्यवधेयम् । अद्भुतरसोऽयम् ।

* अपि चेति । अपिर्जुगुप्सायाम् । चः समुच्चये ।

(१५) गर्हामाह । एतदित्यादि । एतत् पूतनचक्रं श्मशानप्रेतसमूह आलोक्यते । किं कुर्वत् । अत्याकुलतया अक्रमेण युगपत्कृतो यो ग्रासस्ततोऽर्द्धं भूमौ पतितमर्द्धं चर्वणेन मुख एव स्थितम् । तत्र भूमिपतितैरर्द्धभुक्तैर्मनुष्यमांसविघसैः उच्छिष्टैः सर्वत्र वृकान् कोकानारण्यकुक्कुरादीनुत्पुष्णत् पुष्टान् कुर्वत् । अक्रमत्वं प्रतिपक्षशङ्कया । अभिलाषातिशयाद्वा । कीदृशान् । अहमहमिकया मांसग्रहणात् आघर्घरमव्यक्तशब्दं यथा स्यादेवं क्रन्दतः रुदतः । एतत्तु कुक्कुरेषु स्फुटमेव । कीदृशं पूतनचक्रम् । खर्जूरद्रुमदघ्ना तत्प्रमाणा जङ्घा यस्य तत् । एतेन जङ्घानां ग्रन्थियोगित्वकर्कशत्वनीरसत्वलोमशत्वानि दर्शितानि । असिता श्यामा या त्वक् चर्म तया नद्धाः विष्वक् सर्वतः तता विस्तीर्णा याः स्नायवो नहरु इति ख्याता-

खर्जूरद्रुमदघ्नजङ्घमसितत्वङ्नद्धविष्वक्तत-
स्नायुग्रन्थिघनास्थिपञ्जरजरत्कङ्कालमालोक्यते ॥ (१५)

[समन्तादवलोक्य विहस्य च * ]

अहो प्रकारः पिशाचानां एते हि

ततपृथुरसनोग्रमास्यगर्त्तं दधति विदार्य्य विवर्णदीर्घदेहाः ।
ललदजगरघोरकोटराणां द्युतिमिव दग्धपुराणरोहिणानाम् ॥
(१६)

[ परिक्रम्य । ] हन्त ! वीभत्समेवाग्रे † वर्त्तते ।

---

स्नातां ग्रन्थिषु सन्धिभागेषु घनानि दृढानि अस्थ्नां पञ्जराणि येषां तादृशा जरन्तो जीर्णाः कङ्काला मांसादिशून्यास्थिभागा यस्य तत् । वृकपदं शृगालाद्युपलक्षणपरम् । कोक ईहामृगो वृक इत्यमरः । यद्वा । शालावृकाः कपिक्रोष्टुश्वान इति नानार्थेऽमरदर्शनादेतस्यैवैकदेशी वृकशब्दः । तेन भीमसेनादिवदस्यापि तावदर्थप्रतिपादकतेत्यवधेयम् । यद्वा । वृको धोध इति ख्यातः । विघसो भोजनशेषेऽपीत्यमरः । स्याच्छरीरास्थ्नि कङ्काल इत्यमरः ।

* विहस्येति । अतिसात्त्विकोऽपि मयि भीषणत्वममी पूतनाः कुर्वन्तीत्यसम्बद्धक्रियया हासः । यदाह । असम्बद्धैस्तु हासः स्याद्दाग्रेपथ्यक्रियादिभिः । इति । प्रकारो वैलक्षण्यम् ।

(१६) ततेत्यादि । एते पूर्वोक्तादन्ये पिशाचाः ततपृथुरसनोग्रम् आस्यविवरं विस्तृतदीर्घजिह्वाभीषणं मुखविवरं विदार्य्य व्यादाय दग्धपुराणरोहिणानामिव द्युतिं दधति धारन्ति । दग्धत्वेन श्यामत्वं पुराणत्वेन जीर्णत्वं दर्शितम् । रोहिणो रोहण इति ख्यातस्तरुः । धोधराचि इति ख्यातो वा । रोहितोऽपि स एव । अतएव रोहितः प्लीहनाशक इत्यमरोऽपि । रोहणानामिति पाठे रोहन्तीति रोहणास्तरवस्तेषामित्यर्थः । ललता चलता अजगरेण सर्पेण घोरकोटराणां भीषणच्छिद्राणाम् । निष्कुहः कोटरं वा नेत्यमरः । तदिह कोटरस्थास्यमजगरेण रसना रोहिणेन पिशाच उपमीयन्ते । भयानको रसः । यदाह । विकृतरवसत्त्वदर्शनसन्त्रासारण्यशून्यगृहगमनात् । गुरुनृपयोरपराधात् कृतश्च भयानको ज्ञेयः ।

† वीभत्सं घृणाकरणम् ।

निर्भिद्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोफभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आर्त्तः पर्य्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥ (१७)

अपिच । निष्टापस्विद्यदस्नः क्वथनपरिणमन्मेदसः प्रेतकायान्
कृष्ट्वा संसक्तधूमानपि कुणपभुजो भूयसीभ्यश्चिताभ्यः ।

---

(१७) निर्भिद्येत्यादि । अयं प्रेतरङ्कः प्रेताधमः क्षुधाभिशुष्यच्छरीरोऽव्यग्रमनाकुलं यथा तथा क्रव्यं मांसमत्ति खादति । किं कृत्वा । प्रथममादौ कृत्तिं चर्म निर्भिद्य निर्भिन्नीकृत्य पश्चादुत्कृत्य छित्वा । उत्कृत्येति पाठे चर्मकोषाकर्षणमुत्कर्त्तनं तत्पुनः पुनः कृत्वेत्यर्थः । अथानन्तरं पृथुना महता उच्छोफेन भूयांसि बहूनि मांसानि जग्ध्वा भक्षयित्वा । कीदृशानि । अंसयोः स्कन्धयोः स्फिचोः कटिमांसपिण्डयोः पृष्ठे कायपश्चाद्भागे पिण्डयोर्जङ्घापाश्चात्यभागयोरादिपदात् कक्षामूलाद्यवयवेषु सुलभानि । उच्छूनत्वात्तेषाम् । उग्रपूतीनि उत्कटदुर्गन्धानि । पृथूत्सेधेति पाठे पृथुनोत्सेधेन कायेन बहुतां गतानीत्यर्थः । यद्वा । उत्सेधेनोन्नत्या भूयांसीत्यर्थः । उत्सेधः काय उन्नतिरित्यमरः । कीदृशः प्रेतरङ्कः । आर्त्तस्त्वरावान् । पर्य्यस्तमितस्ततः क्षिप्तं नेत्रं येन सः । एतदुभयं प्रेतरङ्केषु प्रसिद्धमेव । अन्तःपर्य्यस्तनेत्र इति पाठेऽन्तर्मध्ये स्थितनेत्रः । प्रेतरङ्कत्वेन कोटराचलादित्यर्थः । आत्तस्नायुत्वनेत्र इति पाठे आत्तानि गृहीतानि स्नायूत्वनेत्राणि येन सः । अत एवान्त्राद्युत्पाटनाय प्रकटितदन्तः । दौर्बल्यप्रकर्षणात् प्रकटितदशनत्वम् । अङ्कस्थात् क्रोडीकृतात् करङ्कात् कपालादाकृष्येत्याक्षेपः । अन्यथापदानामनुपपत्तिः । कीदृशं क्रव्यम् । अस्थिषु यत् सन्तिष्ठति तत् । स्थपुटगतमपि निम्नोन्नतविषमस्थानगतमपीत्यर्थः । अयं वीभत्सो रसः ।

(१८) निष्टापेत्यादि । एतेऽपि कुणपभुजः शवभक्षकाः पिशाचाः बह्वीभ्यश्चिताभ्यः प्रेतकायानाकृष्य तेषामेव जङ्घानलकं जङ्घाप्रधानमस्थि निष्कुष्य विगतमांसावरणं कृत्वा मज्जधाराः मज्जमध्यस्थितस्नेहान् । पिबन्ति । मज्जधाराः कीदृशीः । आराद् दूरत एवोदयिनीर्लम्बमानाः । द्रवमयत्वात् । यद्वा । आरात्समीपे पिबन्तीति योजना । आराद्दूरसमीपयोरिति विश्वः । चिताभूयस्त्वेनातिभीषण-

उत्पक्कस्रंसि मांसं प्रचलदुभयतः सन्धिनिर्मुक्तमारा-
देते निष्कुष्य जङ्घानलकमुदयिनीर्मज्जधाराः पिबन्ति॥(१८)

[विहस्य।] अहो! प्रादोषिकः प्रमोदः पिशाचाङ्गनानाम् *।

तथाहि। अन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-
व्यक्तोत्तंसभृतः, पिनह्य सहसा हृत्पुण्डरीकस्रजः।

---

टीका। कीदृशान्। निष्टप्रेनैपत्तापेन खिद्यन्त्यस्थीनि येषाम्। पद्दन्न इत्यादि-सूत्रेणास्थिकशब्दस्यासन्नादेशेऽल्लोपे रूपम्। अस्थ्न इति पाठो न युक्तः। तृतीयादावस्थ्नीत्यादिनानङ्विधानात्। यद्वा। प्रेतकायादिति पञ्चम्यन्तः पाठः। अतोऽस्थ्न इति पञ्चम्यामनङि रूपम्। चिताग्य इति ल्यब्लोपे पञ्चमी। निरस्त-पतावित्यनश्याश्वत्तौ पलम्। क्वथनेन पाकक्रमेणाङ्गेषु परिणमत् जीर्य्यत् मेदो येषां तान् संस्रष्टधूमानपि। कीदृशं जङ्घानलकम्। उत्पक्कमुच्छूनं कृत्वा पक्कमत एव स्रंसनशीलं मांसं यस्मात्। यद्वा उत्पक्केनोद्गतपाकेन स्रंसि मांसं यस्मात्। उत्पक्क इति भावे क्तः। प्रचलन्तः शिथिलीभवन्त उभयतो जानूरुपर्वणी गुल्फाश्च ये सन्धयोऽस्थ्नां परस्परमिलनस्थानानि तैर्निर्मुक्तम्। प्रचलमिति पाठे उभयतः पार्श्वाभ्यां प्रचलम्। अत एव सन्धिपरिमुक्तमित्यर्थः। कुणपः शवम-स्त्रियामित्यमरः। नलकं नरहड़ इति ख्यातम्। मरी इति ख्यातं वा। वीभत्स एवात्र रसः।

* अहो इति वीभत्सशृङ्गारदर्शनेन आश्चर्य्यम्। प्रादोषिको रात्रिप्रारम्भजः। शृङ्गारवीभत्सयोः परस्परविरोधेऽपि संस्थानसाम्यात् संभेदाभास इह। प्रसाधनाचात्र शृङ्गारः। यदाह, ऋतुमाल्यालङ्कारैः प्रियजनगान्धर्वकाव्यसेवाभिः। उपवनगमनविहारैः शृङ्गाररसोऽपि सम्भवति॥ अतएवायं श्लोकः कण्ठाभरणेऽपि रससङ्कराभास उदाहृत इति।

(१९) अन्त्रैरित्यादि। एताः पिशाचस्त्रियः कान्तैः सम्भूय मिलित्वा कपालचषकैः अस्थिस्नेहसुरा मज्जमद्यानि पिबन्ति। कीदृश्यः। अन्त्रैः कल्पितः रचितो मङ्गलप्रतिसरो हस्तसूत्र मूर्णामयं याभिस्ताः। अवैधव्यचिह्नं मङ्गलप्रतिसरो भवति। यद्वा। प्रतिसरः कङ्कणम्। तदप्यवैधव्यचिह्नतया मङ्गलम्। कङ्कणे करसूत्रे च भवेत् प्रतिसरोऽस्त्रियामिति मेदिनीकारः! स्त्रीहस्त एव रक्तपद्मं तेन व्यक्त-

एताः शोणितपङ्ककुङ्कुमजुषः, सम्भूय कान्तैः पिब-
न्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥(१९)

[ परिक्रम्य पुनरशस्त्रेति पठित्वा। ] कथं द्रागतिप्रशान्त-भीषणभीषिकाप्रकारैर्झटिति अपक्रान्तं पिशाचैः। अहो! निःसत्त्वता पिशाचानाम्। [ परिक्रम्य दृष्ट्वा सनिर्वेदम्। ] विचितश्चैष समन्तात् श्मशानवाटः।

तथाहि। खलु इयं पुरत एव *।

गुञ्जत्कुञ्जकुटीरकौशिकघटाघूत्कारसंवलित-
क्रन्दत्फेरवचण्डडात्कृतिभृतप्राग्भारभीमैस्तटैः।

---

मुत्तंसं कर्णभूषणं बिभ्रति याः। सहसा शीघ्रं हृत्पुण्डरीकस्रजः हृत्पद्ममालाः विनह्य परिधाय। हृत्पद्मस्य श्वेततया पुण्डरीकपदेनोपन्यासः। यदाह। द्वादशाङ्गुलसम्पूर्णे श्वेते हृदयपङ्कजे। इति। मालाया मनोहरतया अन्या सा गृह्णात्विति परिधाने शीघ्रता। अत एव प्रीताः। शोणितपङ्ककुङ्कुमजुषः रक्तकर्दमकुङ्कुमवत्यः। अत्र पिबन्त्यस्थीत्यादौ यतिभङ्गशङ्का न कार्या। सन्धिकृतपदविच्छेदे तस्यादोषत्वात्। एवं दृश्यस्युपलविषमानित्यादौ तथा दर्शनात्। चषकं पानपात्रं स्यादिति हारावली। इह बीभत्समिश्रः शृङ्गाररसः।

* झटिति शीघ्रम्। विभीषिका परभयदायिनी रौद्ररूपता। तस्याः प्रकारा भेदाः। अपक्रान्तं प्रपलाय्य गतम्। निःसत्त्वा इत्यनेनात्मप्रौढिर्दर्शिता। महामांसविक्रयादपि नेष्टलाभ इति निर्वेदः। विचितो व्याप्तः। तमोव्याप्तत्वेन कथं विचितत्वज्ञानमित्यत आह इयमिति।

(२०) गुञ्जदित्यादि। इयं सरित् पुरत एवास्ति। पारेश्मशानं श्मशानपारदेशे। पारे मध्ये षष्ठ्या वेति समासः। कुञ्ज एव कुटीरोऽल्पा कुटी तत्र या कौशिकघटा पेचकसमूहः। गुञ्जन्तीनां कुञ्जकुटीरकौशिकघटानां घूत्काररूपं संवल्गितं ध्वनितम्। क्रन्दत्फेरवाणां रुदच्छृगालानां डात्कृतिर्डात्कारः शब्दविशेषः। अनयोर्द्वन्द्वः। ताभ्यां भृतः पूरितो यः प्राग्भारोऽग्रतटं तेन भीमैः भीषणैस्तटैर्लक्षिता। लक्षणे तृतीया। अन्तरभ्यन्तरे शीर्णास्त्रुटिता ये करङ्काः कपालानि तेषां

अन्तःशीर्णकरङ्ककर्करतरत् संरोधिकूलङ्कष-
स्रोतोनिर्गमघोरघर्घररवा पारेश्मशानं सरित् ॥ (२०)

[नेपथ्ये ।] हा ताद णिक्करुण ! एसो दाणिं दे णरेन्द-चित्ताराहणोवअरणो जणो विवज्जइ * (क) ।

माध । साकूतमाकर्ण्य ।

नादस्तावद्विकलकुररीकूजितस्निग्धतार-
श्चित्ताकर्षी परिचित इव श्रोत्रसंवादमेति ।

---

(क) हा तात निष्करुण ! एष इदानीं ते नरेन्द्रचित्ताराधनोपकरणं जनो विपद्यते ।

---

कर्करो भग्नावयवः काकर इति प्रसिद्धो वा कर्करो यत्र । अत एव तरतां सन्तरणशीलानां संरोध्यवरोधकः कूलङ्कषः कूलविदारको यः स्रोतोनिर्गमस्तेन घोरो घर्घरोऽव्यक्तरूपो रवः शब्दो यत्र सा । तरःसंरोधीति पाठे तरसा वेगेन संरोधि गमनविरोधि । कर्करेण दृढेन तरसा संरोधीत्यर्थः । अल्पा कुटी कुटीरः स्यादित्यमरः । घटाशब्दः समूहमात्रवचनोऽपि करिघटादौ त्वात्यन्तिकस्तस्य प्रयोग इत्यवधेयम् । घूत्कारडात्कृती अनुकरणशब्दौ । क्वचित् फात्कृतीति पाठः । तत्रापि फात्कृतिरनुकरणशब्द एव । फेरुफेरवजम्बुका इत्यमरः । तटः प्राग्भार इत्यपीत्यमरः । कर्करो भग्नभागेऽपि दृढेऽपि खण्डितेऽपि चेति धरणिः । तदिह करङ्ककर्करसङ्कुलनदीप्रवाहः तीरं पातयति घर्घररवं च कुरुते इति स्फुटमेव ।

* हा तात ! इत्यत्र हायोगेऽपि न द्वितीया । हाशब्दस्य शोकवाचिन उपग्रहात् । तस्य च सम्बोधने प्रथमाप्रयोगात् । तदन्यार्थस्य योगे द्वितीयेति न्यासः । अङ्कमुखे स्त्रीरत्नापहारस्य सूचितत्वान्नेपथ्ये भणनमिदम् ।

(२१) नाद इत्यादि । अयं तावन्नादः श्रोत्रयोः संवादं पूर्वोपलब्धाकारतामेति । कीदृशः । विकला त्रस्ता या कुररी हापूतीति प्रसिद्धा पक्षिवधूस्तस्याः कूजितवत् स्निग्धः स्नेहलस्तार उच्चश्च । तासान्मालत्यास्तारो नादः । अतएव

अन्तर्भिन्नं भ्रमति हृदयं, विह्वलत्यङ्गमङ्गम्,
देहस्तम्भः, स्खलति च गतिः कः प्रकारः, किमेतत् ॥२१
करालायतनाच्चायमुच्चरत्करुणध्वनिः ।
विभाव्यते ननु स्थानमनिष्टानां तदीदृशाम् ॥ (२२)

भवतु, पश्यामि । [ इति परिक्रामति । ]

ततः प्रविशतो देवतार्चनव्यग्रहस्तौ कपालकुण्डलाघोरघण्टौ कृतवध्यचिह्ना मालती च * ।

माल । हा ताद णिक्करुण ! एसो दाणिं दे णरेन्द-चित्ताराहणोवअरणो जणो विवज्जइ । हा अम्ब ! सिणेह-मअ हिअए ! तुमं वि हदासि देव्वदुव्विलसिदेण । हा मालदीमअजीविदे ! मम कल्लाणसाहणेक्कसुहसअलवावारे

---

चित्ताकर्षी प्रियत्वाच्चित्तानुकर्षकः । परिचित इव पूर्वमुपलब्ध इव । अतएव श्रोत्रसंवादिता अस्य । परिचयश्च मञ्जरस्य इह वृत्तः । यदि श्रोत्रसंवादमेति कथं तर्हि इवकार इत्यत आह । अन्तर्भिन्नं द्विधाभूतं संशयाक्रान्तं हृदयं भ्रमति दोला-यते । उभयत आकर्षणात् । अत्र मालतीगमनासम्भवात् संवादस्य च स्फुटत्वात् । यद्वा । अन्तर्भिन्नं विद्रमसम्भवेनेत्यर्थात् । तथा वस्तुगतानिष्टशङ्कया अङ्गमङ्गं प्रत्यङ्गं विह्वलति । करादीनि कम्पन्त इत्यर्थः । तस्याः कथमिहावस्थानमिति भयाद्देहस्तम्भः । यदाह । हर्षव्याधिभयासरोषाद्यैः स्तम्भः सम्भवति । चिन्ता-स्तिमितत्वाद्गतिश्च स्खलति । कथमकस्मादेव ममेदं वृत्तमिति विमर्षमाह । कोऽयं प्रकारः किंनिमित्तं स्वं इमाविष्करोति । किमेतत् । सैवेयं किमन्यद्वा तत्तुल्य-मित्यर्थः । संमुग्धमिति पाठे कर्णपीडां करोतीत्यर्थः नादश्रुत्या मोहात् ।

(२२) करालेत्यादि । अयम् उच्चरत्करुणध्वनिः करालायतनात् विभाव्यते सम्भाव्यते । ननु सम्भावनायाम् तत् करालायतनम् ईदृशानां क्रन्दनकारणानां अनिष्टानां स्थानम् ।

* वध्यचिह्नं न्यस्तारक्तकेत्यादि ।

भअवदि ! चिरस्स जाणाविदासि दुःखं सिणेहेण, * हा पिअसहि लवङ्गिए! सिविणआवसरमेत्तदंसणा अहं दे संवुत्ता (ख)।

माध। हन्त †! सैवेयं मदिरेक्षणा, सम्प्रति निरस्त एव सन्देहः, तदहमपि नामैनां जीवन्तीं सम्भावये।

[ त्वरितं परिक्रामति। ]

अघोरघण्टकपालकुण्डले। देवि चामुण्डे! नमस्ते नमस्ते।

सावष्टम्भनिशुम्भनिर्भरनमद्भूगोलनिष्पीड़न-
न्यञ्चत्कर्परकूर्मकम्पविगलद्ब्रह्माण्डखण्डस्थिति।
पातालप्रतिमल्लगल्लविवरप्रक्षिप्तसप्तार्णवम्
वन्दे नन्दितनीलकण्ठपरिषद्व्यक्तर्द्धि वः क्रीड़ितम् ॥२३॥

---

(ख) निष्करुण! एष इदानीं ते नरेन्द्रचित्ताराधनोपकरणं जनो विपद्यते, हा अम्ब! स्नेहमयहृदये! त्वमपि हतासि दैवदुर्विलसितेन, हा मालतीमयजीविते! मम कल्याणसाधनैकशुभमकलव्यापारे! भगवति! चिरस्य ज्ञापितासि दुःखं स्नेहेन, हा प्रियसखि लवङ्गिके! स्वप्नावसरमात्रदर्शना अहं ते संवृत्ता।

---

* अत्र भगवति कामन्दकि इति शेषः। चिरस्य बहुकालम्।

† हन्तेति निश्चयलाभे।

(२३) सावष्टम्भेत्यादि। देवि! युष्माकं क्रीड़ितं नृत्यं वन्दे। कीदृशम्। सावष्टम्भः साटोपो यो निशुम्भो निर्दययन्त्रणं करणभेदस्ततः निर्भरात् संभ्रमादानमतो भूगोलस्य अवनिचक्रस्य निष्पीड़नेन न्यञ्चदधोगच्छत् कर्परं पृष्ठास्थि यस्य एवम्भूतस्य कूर्मस्य कम्पेनाङ्गचालनेन विगलन्ती भ्रश्यन्ती ब्रह्माण्डखण्डस्य स्थितिर्यत्र तत्तथा। अनेन भूकम्प उक्तः। तथा च नम्रीभूतभूगोले तु अर्णवानामुत्सेकात्पातालप्रतिमल्ले पातालतुल्ये गल्लविवरे प्रक्षिप्ताः सप्तार्णवा यत्र

अपिच।

प्रचलितकरिकृत्तिपर्य्यन्तचञ्चन्नखाघातभिन्नेन्दुनिस्यन्दमानामृतश्चयोतजीवत्कपालावलीमुक्तचण्डाट्टहासत्रसद्भूरिभूतप्रवृत्तस्तुति, श्वसदसितभुजङ्गभोगाङ्गदग्रन्थिनिष्पीडनस्फारफुल्लत्फणापीठनिर्य्यद्विषज्योति-रुज्जृम्भणोड्डामर-व्यस्तविस्तारिदोः खण्डपर्य्यासितक्ष्माधरम्। ज्वलदनलपिशङ्गनेत्रच्छटाच्छन्नभीमोत्तमाङ्गभ्रमिप्रस्तुतालातचक्रक्रियास्यूतदिग्भागम् उत्तु-

---

तत्। नन्दितनीलकण्ठपरिषत् हर्षितभैरवसभं व्यक्तर्द्धि प्रकटविभवम्। उत्क्षिप्ता तु भवेत्पार्ष्णिर्निशुम्भोऽयं निगद्यते। अङ्गुल्योग्राञ्चिताः सर्वाः पादाग्रतलसञ्चरे॥ इति भरतः। कटाहे च कपालेऽपि पृष्ठास्थनि च कर्पर इति शाश्वतः। नाच्यं शरीवर्णनमिदम्।

* दण्डकमाह प्रचलितेत्यादि। देवि! युष्माकं ताण्डवमुद्धतं नृत्यमस्माकमभीष्ट्यै अशुभनाशाय हृष्ट्यै आनन्दाय च भूयात्। अरिष्ट्यै इति पाठे रिष्टिरशुभं तदभावोऽरिष्टिस्तस्यै। अनेन भाव्यनिष्टार्थसूचकदण्डोऽप्युक्तः। यदाह। आकस्मिकमसंवद्धं समर्थमिव यद्भवेत्। वाचामन्ते स दण्डः स्याद्भाव्यनिष्टार्थसूचकः॥ रिष्टिः खड्गे नाशुभे स्त्रीति मेदिनीकारः। अरिष्टे तु शुभाशुभ इत्यमरः। यद्वा। ऋकारो देवमाता स्यादिति कोशादृशब्दात्सम्बुद्धौ गुणे च हे अः देवमातः दृष्ट्यै अभीष्ट्यै भूयादित्यर्थः। कीदृशम्। प्रचलितगजासुरचर्मपर्य्यन्तेषु उन्नमतां नखानामाघातैर्भिन्नात् स्फुटिताद्देवीमस्तकस्थचन्द्रात् चरदमृतस्य श्चयोतेनास्रवेन जीवन्तीभिः कपालावलिभिर्मुण्डमालाभिर्मुक्तैश्चण्डाट्टहासैः अत्युच्चहसनैस्त्रसतां भूरिभूतानां बहुभूतगणानां प्रवृत्ता स्तुतिर्यत्र तत्। यद्वा। भूतगणैः प्रवृत्ता प्रवर्त्तिता स्तुतिर्यत्र तत्। अन्तर्भावितण्यर्थः। यद्वा। प्रचलितः करिचर्मरूपोऽवधिर्यत्र तत्। पश्चात् कर्मधारयः। तथा ताण्डवाडम्बरायासेन श्वसतां असितभुजङ्गानां श्यामसर्पाणां भोगैः कायैर्यैः अङ्गदग्रन्थयः केयूराकारग्रन्थयस्तेषु निष्पीडनेन स्फार उद्गतसुखविकासस्सरस्वो वा फुल्लन् विस्तारिताङ्गचयः फणापीठः। विस्तारितया पीठेन रूपकम्। ततो निर्य्यद्विषज्योतिषः निर्गतविषाग्नेः उज्जृम्भणेनाधिक्येनोड्डामरः भयङ्करो विषमो वा व्यस्त इतस्ततोगामी विस्तारी दीर्घो यो

ङ्गखट्वाङ्गकोटिध्वजोद्धूतिविच्छिन्नतारागणम्, प्रमुदितकटपूतनोत्तालवेतालतालस्फुटत्कर्णसम्भ्रान्तगौरीघनाश्लेषहृष्यन्मनस्त्र्यम्बकानन्दि वस्ताण्डवं, देवि! भूयादभीष्ट्यै च हृष्ट्यै च नः *॥

[ इत्यभिनयतः । ]

माध। हा धिक् प्रमादः †।

न्यस्तालक्तकरक्तमाल्यवसना, पाषण्डचाण्डालयोः
पापारम्भवतोर्मृगीव वृकयोर्भीरुर्गता गोचरम्।
सेयं भूरिवसोर्वसोरिव सुता मृत्योर्मुखे वर्त्तते
हा धिक्कष्टमनिष्टमस्तकरुणः कोऽयं विधेः प्रक्रमः॥ (२४)

---

दोःखण्डः हस्तसमूहस्तेन पर्य्यासितः क्षिप्तः क्ष्माधरः पर्वतो यत्र तत्। देव्या अनेकबाहुशालितया दोःखण्ड इत्युक्तम्। अञ्जादिकदम्बं खण्डमस्त्रियामित्यमरः। तथा ज्वलता अनलेन पिशङ्गं पिङ्गलं यन्नेत्रं ललाटलोचनं तस्य छटा ज्वालानिर्गमप्रसरः तया आच्छन्नं भीमं यदुत्तमाङ्गं शिरस्तस्य भ्रमिसंकुला-कारेण भ्रमणं तया प्रस्तुता प्रारब्धा अलातचक्रक्रिया वह्निप्रज्वलितार्धकाष्ठविशेष-कर्म तया स्यूता इवैकत्र प्रतिबद्धा इव दिग्भागा यत्र तत्। तथा प्रमुदित कट-पूतनोत्तालवेतालानां हृष्टकटपूतनोद्भटवेतालानां तालेन कलकलेन स्फुटत्कर्णा अतएव संभ्रान्ता त्रसन्ती सत्वरा वा या गौरी तस्या घनाश्लेषेण निविडालिङ्गनेन हृष्यत् मनः चित्तं यस्य एवम्भूतं त्र्यम्बकं शिवमत्यर्थमानन्दयति तत्। आभीक्ष्ण्ये णिनिः।

† धिक्प्रमाद इत्यत्र वर्त्तत इति क्रियाध्याहारः। तत उपपदविभक्तेः कारकविभक्तिर्बलीयसीति धिग्योगे द्वितीयां बाधित्वा प्रथमेत्यवधेयम्।

(२४) न्यस्तेति। वसोरिव अष्टसंख्यकवसुनामकस्येव भूरिवसोरन्वर्थनामकस्य मालतीपितुः सेयं पुरोवर्त्तिनी सुता मालती माल्यञ्च वसनञ्च ते अलक्तकेन रक्ते माल्यवसने न्यस्ते अर्पिते यस्यै अघोरघण्टकपालकुण्डलाभ्यामित्यर्थः। सा पापारम्भवतोर्हत्यारूपापकर्मारभमाणयोरित्यर्थः। पाषण्डचाण्डालयोः तादृश-स्वभावयोरित्यर्थः। वृकयोर्व्यालवद्विरुद्धस्वभावयोर्गोचरं विषयं गता भीरुर्भय-शीला मृगीव मृत्योर्यमस्य मुखे वर्त्तते हा विषादे धिक् एताविव्यर्थः। कष्टमनिष्ट

कपाल। त्वं भद्रे! स्मर दयितोऽत्र यस्तवाभू-

दद्य त्वां त्वरयति दारुणः कृतान्तः *।

माल। हा दइअ! णाह माहव! परलोअगदोवि सुमरिदव्वो तुम्हेहिं अअं जणो, ण हु सो उवरदो, जस्स वल्लहो जणो सुमरेदि † (ग)।

कपाल। हन्त! माधवानुरक्तेयं वराकी तपस्विनी ‡।

अघोर। [ शस्त्रिमुद्यम्य। ] यदस्तु, व्यापादयामि।

चामुण्डे! भगवति! मन्त्रसाधनादा-

वुद्दिष्टामुपनिहितां भजस्व पूजाम् ¶॥

---

(ग) हा दयित नाथ माधव! परलोकगतोऽपि स्मर्तव्योऽयं जनो युष्माभिः, न खलु स उपरतो यस्य वल्लभः स्मरति।

---

नमित्यर्थः। विधिः स्रष्टुरस्तकरुणः करुणाशून्यः कोऽयं प्रक्रम आरम्भ इत्यर्थः। एतद्विधिविलसितम् अन्यथा नैतत् घटितुं शक्यते।

* त्वं भद्रेत्यादि। प्रहर्षिणीच्छन्दसा श्लोकार्द्धम्। चामुण्डे भगवतीत्याद्यग्रिमार्द्धम्। हे भद्रे! यस्तव दयितो वल्लभत्वेन इष्टस्तं स्मर। गुरुत्वात् स्मरणस्य। यदाह। पतिरेको गुरुः स्त्रीणामिति। यद्वा। मदुपहरणीयत्वेन स इह जन्मनि ते वल्लभो न भूत एव। अतो जन्मान्तरेऽपि तल्लाभाय तं स्मर। यदाह। यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय! सदा तद्भावभावितः। इति। कृतान्तो यमः।

† स्मरणमाह। यस्येत्यत्राधीगर्थेति कर्मणि षष्ठी। यस्य गुणमिति वा। अन्तकाले माधवस्मरणं मुक्तिहेतुरिति कटाक्षितम्।

‡ हन्त खेदे। कामन्दकीमित्रपुत्रत्वान्ममापि माधवस्तादृश एव। तदनुरक्ता चेयं कथं वध्येति खेद इति भावः। अतएव तपस्विनी अनुकम्प्या।

¶ उद्दिष्टां वाचा प्रतिज्ञाताम्। उपनिहितामुपढौकिताम्।

[ इति हन्तुमुपक्रान्तः । ]

माध ।

[ सहसोपसृत्य प्रकोष्ठे मालतीं निक्षिप्य । ]

दुरात्मन् ! एष प्रतिहतोऽसि कापालिकापसद * ! नन्वयं न भवसि ।

माल । [ सहसावलोक्य । ] परित्ताअदु मं महाणुभाओ माहवो ।

[ इति माधवमालिङ्गति । ]

माध । महाभागे ! न भेतव्यम् भेतव्यम् ।

मरणसमये त्यक्त्वा शङ्कां प्रतापनिरर्गल-
प्रकटितनिजस्नेहः सोऽयं सखा पुर एव ते ।
सुतनु ! विसृजोत्कम्पं सम्प्रत्यसाविह पाप्मनः
फलमनुभवत्युग्रं पापः प्रतीपविपाकिनः ॥ (२५) ॥

अघो । आः क एष पापोऽस्माकमन्तरायः संवृत्तः ? ।

कपा । मालत्या एवायमस्याः स्नेहभूमिः कामन्दकीसुहृत्पुत्रो, महामांसस्य पणयिता, माधवो नाम ।

---

* कफोणेरधोभागो मणिबन्धपर्य्यन्तः प्रकोष्ठः । विक्षिप्यापसार्य्य । खड्गहस्तत्वेन बाहुमध्येऽपसारणम् । प्रतिहतो निराकृतः । अपसद ! निन्दित !

(२५) मरणेति । मरणसमये शङ्कां जीवनस्येतिभावः । त्यक्त्वा प्रतापेन निरर्गलः अनुल्लङ्घनीयः तथा प्रकटितः निजः स्वीयः स्नेहो यस्य स च इति कर्मधारयः । स दृष्टपूर्वः अयं दृश्यमान इत्यर्थः । ते तव सखा बान्धवः पुर एव वर्त्तते इति शेषः । अतएव हे सुतनु ! शोभनाङ्गि ! उत्कम्पं भयं विसृज त्यज सम्प्रति असौ पापकारित्वात् पापः अघोरघण्टः इहात्र प्रतीपेन प्रतिकूलाचरणेन विपाकिनः परिपक्वस्य परिणामकठिनस्येत्यर्थः । पाप्मनः कलुषस्य उग्रं मरणरूपमुत्कटं फलमनुभवतु लभतामित्यर्थः ।

माध। [ साखम्। ] महाभागे ! किमेतत् ?

माल। [ चिरादाश्वस्य। ] महाभाअ ! अहं ण किम्पि जाणामि, एत्तिअं उण जाणामि, उवरिअलिन्दे प्पसुत्ता, इह-प्पवुद्धह्मि, तुह्मे उण कहिम् ? (च)।

माध। [ सलज्जं। ] त्वत्पाणिपङ्कजपरिग्रहपुण्यजन्मा
भूयासमित्यभिनिवेशकदर्थ्यमानः।
भ्राम्यन्नृमांसपणनाय, परेतभूमा-
वाकर्ण्य, भीरु ! रुदितानि तवागतोऽस्मि ॥ (२६)

माल। [ खगतम्। ] हद्धी ! कधं मम कारणादो एव्व एदे अप्पणिरपेक्खा परिक्कामन्दि (ङ) !

माध। अहो नु खलु भोः ! तदेतत्काकतालीयं नाम सम्प्रति हि।

---

(च) महाभाग ! अहं किमपि न जानामि, एतावदेव पुनर्जानामि, उपर्य्यलिन्दके प्रसुप्ता इह प्रबुद्धास्मि, यूयं पुनः क ?।

(ङ) हा धिक् ! हा धिक् ! कथं मम कारणादेवमेते आत्मनिरपेक्षाः परिक्रामन्ति।

---

(२६) तदिति। हे भीरु ! मालति ! तव पाणी एव पङ्कजे ताभ्यां यः परिग्रहः ग्रहणं तयोरिति वा। स एव पुण्यं तस्मात् जन्म यस्य तादृशः भूयास महमिति शेषः। इत्यभिनिवेशेन समाधानेन कदर्थ्यमानः पीड्यमानो भ्राम्यन् अनेन पथेत्यर्थः। नृमांसपणनाय नरमांसविक्रयाय परेतभूमौ श्मशाना-लये तव रुदितान्याकर्ण्य श्रुत्वा आगतोऽस्मि।

राहोश्चन्द्रकलामिवाननचरीं दैवात्समासाद्य मे,
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम् ।
आतङ्काद्विकलं, द्रुतं करुणया, विक्षोभितं विस्मयात्,
क्रोधेन ज्वलितं, मुदा विकसितं, चेतः कथं वर्त्तताम् ॥ २७

अघो । रे रे ब्राह्मणडिम्भ ! ।

व्याघ्राघ्रातमृगीकृपाकुलमृगन्यायेन, हिंसारुचेः
पाप ! प्राण्युपहारकेतनजुषः प्राप्तोऽसि मे गोचरम् ।
सोऽहं प्राग्भवतैव भूतजननीमृध्नोमि, खड्गाहति-
च्छिन्नस्कन्धकबन्धरन्ध्ररुधिरप्राग्भारनिष्यन्दना ॥ (२८)

---

(२७) राहोरिति । आनने चरति या तां मुखप्रविष्टामित्यर्थः चरेष्ट इति टः टित्वात् ङीप् । राहोर्मुखग्रस्तां चन्द्रकलामिव स्थितामित्युत्प्रेक्षा । प्रेयसीं प्रियतमां मालतीं अस्य पुरः स्थितस्य दस्योः शत्रोः कृपाणपातविषयात् खड्गप्रहारघातात् आसाद्य प्राप्य आच्छिन्दतः बलात् गृह्णतः मे मम चेतः कथमतिक्रमेण आतङ्कात् किमिदमिति भयात् विकलं विह्वलं वर्त्तताम् करुणया एतादृश्यवस्थेति दयया, विस्मयात् अघटनघटनारूपात् विक्षोभितं अस्थिरं क्रोधेन एतस्य प्रतीकाराकरणरूपेण ज्वलितम् मुदा दर्शनजन्याह्लादेन विकसितं प्रफुल्लं वर्त्तताम् । अत्रैकस्य चित्तस्य बहुविधचित्तधर्मवत्त्वा पर्य्यायालङ्कार भेदः । एकमनेकस्मिन्नेकमेकस्मिन्नित्यादिलक्षणात् ।

(२८) व्याघ्रेति । हे पाप ! पापानुष्ठायिन् माधव ! व्याघ्रेण आघ्राता गृहीता या मृगी तस्यां या कृपा तत्प्राणरक्षारूपेत्यर्थः । तया आकुलः व्याकुलः यो मृगस्तन्न्यायेन तादृूप्येण स यथा तथेत्यर्थः । प्राणिनां जन्तूनां य उपहारः करालायै निवेद्य दानं तस्य केतनंजुषः तत्र स्थितस्य अतएव हिंसारुचेः हिंसामात्रप्रवृत्तस्य मे मम गोचरं प्राप्तोऽसि । खड्गाहत्या छिन्नस्कन्धस्य अतएव कबन्धस्य अपमूर्द्धकलेवरस्य तव रन्ध्रेभ्यो निर्गच्छन्ति इति यावत् यानि रुधिराणि तेषां प्राग्भारस्य यो निष्यन्दः स्रावः स विद्यतेऽस्य तेन भवतैव प्रागादावेव भूतानां जननीं देवीं करालामित्यर्थः । ऋध्नोमि प्रीणयामि । आदौ मदीयकृपाणपातघातितस्य तव रक्तेन इयं भगवती तृप्यतु इत्यर्थः ।

माध। दुरात्मन् ! पाषण्ड ! चाण्डाल !।

असारं संसारं, परिमुषितरत्नं त्रिभुवनम्,
निरालोकं लोकं, मरणशरणं बान्धवजनम्।
अदर्पं कन्दर्पं जननयननिर्माणमफलम्,
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः॥ (२८)

अपिच। रे रे पाप !

प्रणयिसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत्।

---

(२८) मारणेऽपराधमाह। असारमित्यादि। हे पाखण्ड ! जगत् असारं सारशून्यं विधातुं कर्त्तुं कथं व्यवसितः कृतप्रारम्भोऽसि। तथा च संसारसारभूतेयमेव। अनया विना असार एव स इति। यदाह। सारं तु मदिरारत्नं संसार इति निश्चयः॥ इति। जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्षते॥ इति। तत्सर्वमाकृष्येयं निर्मिता। अतो रत्नमियम्। मनोहरत्वदीप्तिमत्त्वतरलत्वादिनेयं वा रत्नम्। अतएव तदभावात् प्रमुषितरत्नं त्रिभुवनं कर्त्तुं व्यवसितोऽसि। तद्दैतत्सर्वविषयं चौर्यं दुरन्तमिति भावः। इयमतिकान्त्या जगदुद्योतयतीत्यालोकभूता। एतदभावान्निरालोकं तमःप्रविष्टं लोकं जनं कर्त्तुं व्यवसितोऽसि। अतएवोत्कृष्टं प्रति लोकोक्तिस्तेन विनान्धकारस्तत्सत्त्वायाम् उद्योत इति। बान्धवजनानामेतत्सखीनामियं जीवनहेतुः। अत एतन्नाशान्मरणशरणं सखीजनं विधातुं व्यवसितोऽसि। अन्यस्त्रीनाशे तत्सख्यो दुःखिताः। एतन्नाशे तु म्रियन्त एवेति भावः। अत्रासारं संसारमित्यादिना नायिकागतरामणीयकातिशयवर्णनमुपक्रम्य मरणशरणमित्यादिना स्वविषयताप्रतिपादनान्नैकवाक्यतयैकरसनिर्वाह इत्यदोषत्वम्। मातादिबन्धुव्यतिरिक्तोदासीनबान्धवसंग्रहपराज्जनशब्दात् स्वस्यैव माधवस्तथा विपत्तिं सूचयतीत्यदोषात्। तदीयनानागुणचिन्तनादेव मरणशरणता ममेत्यारब्धनिर्वाहाच्च। कन्दर्पश्चैतया मोहनास्त्रेण दर्पं करोति। एतदभावाददर्पम्। जननयनस्यैतद्दर्शनमेव फलम्। अत एतन्नाशात्तदफलम्। जगत् अनया अलङ्कृतमेव। एतदभावाज्जीर्णारण्यतुल्यं तदिति। अत्र प्रियाप्रशंसया शृङ्गारो बन्धुमरणात् करुणा पाखण्डाक्षेपाद्वीरः कथमित्यद्भुतमिति नाना रसाः।

वपुषि बधाय तत्र तव शस्त्रमुपक्षिपतः,
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः॥ (२०)

अघोर। आः दुरात्मन्! प्रहर, नन्वयं न भवसि।

माल। पसीद णाह साहसिअ! दारुणो क्खु अअं हदासो, परित्तासु मं पडिणिअत्तीअदु इमादो अणत्थसंसआदो * (च)।

कपा। भगवन्! अप्रमत्तो भूत्वा, दुरात्मानं व्यापादय †।

माधवाघोरघण्टौ मालतीकपालकुण्डले प्रति।

अयि भीरु!

धैर्य्यं निधेहि हृदये, हत एष पापः,
किं वा कदाचिदपि केनचिदन्वभावि।

---

(च) प्रसीद नाथ साहसिक, दारुणः खलयं हताशः, परित्रायस्व मां प्रतिनिवर्त्ततामस्मादनर्थसंशयात्।

---

(२०) पुनरपि दीपमुद्दीप्य दण्डं चिकीर्षुराह। प्रणयीत्यादि। हे पाप! तव शिरसि एष भुज आकस्मिकयमदण्ड इव पततु। आकस्मिकत्वेनाप्रतिक्रियत्वमुक्तम्। कीदृशस्य तव। तत्र वपुषि अतिसुकुमारे मालतीशरीरे बधाय शस्त्रम् उपक्षिपतः उत्तोलयतः। अत्र भुजपदेन बाहुव्यापारमात्रेणैव हन्तव्योऽसीति शौर्य्यातिशय उक्तः। यत् मालत्याः वपुः सुकुमारशिरीषपुष्पाघातैरपि ताम्यति खिद्यति। कीदृशैः। सप्रश्रयसखीसविलासपरिहासरसप्राप्तैः अपि। अत्रापि शृङ्गारवीरकारुण्यसंभेदः।

* अत्र त्वज्जीवने मम जीवनमपि सफलम्। अन्यथा तु मरणमेव वरमिति भावः।

† मालतीव कपालकुण्डलापि स्वनायमाह। भगवन्निति। अवष्टम्भार्थमप्रमत्त इति।

(२१) द्वयोर्भयं शालीभावाद्दतुः। धैर्य्यमित्यादि। हे भीरु! त्वं हृदये

सारङ्गसङ्गरविधाविभकुम्भकूट-
कुट्टाक-पाणिकुलिशस्य हरेः प्रमादः ॥ (३१)

[ नेपथ्ये कलकलः। सर्वे आकर्णयन्ति। ]

[पुनर्नेपथ्ये।] भो भो मालत्यन्वेषिणः सैनिकाः! इयम् अमात्यभूरिवसुम् आश्वासयन्ती अप्रतिहतप्रज्ञागतिः भगवती कामन्दकी वः समादिशति।

पर्य्यवष्टभ्यतामेतत्करालायतनं द्रुतम् *।
नाघोरघण्टादन्यस्य कर्मैतद्भीषणाद्भुतम्।
न करालोपहाराच्च फलमन्यद्विभाव्यते ॥ (३२)

कपा। भगवन्! पर्य्यवष्टब्धाः स्मः †।

अघोर। सम्प्रति विशेषतः पौरुषस्य अवसरः ‡।

---

धैर्य्यं कुरु। एष पापी हतः। अस्य वधे कुतः संशय इति वृथा भयं ते इति भावः। अत्र युक्तिमाह। सारङ्गेण मृगेण सह युद्धविधाने हरेः सिंहस्य प्रमादोऽनवधानता किं वा केनचित् कदाप्यनुभूतः। कीदृशस्य। इभकुम्भरूपं यत् कूटमुच्चप्रदेशस्तस्य कुट्टाकः कुट्टनशीलः पाणिः हस्त एव वज्रं यस्य। यद्वा। हरेरिन्द्रस्य हस्तिना सह युद्धे नास्ति प्रमादः। कीदृशस्य। हस्तिकुम्भवत्पीवरशृङ्ग-कुट्टाकं पाणिस्थकुलिशं यस्य। कुम्भकूटपाणिकुलिशपदे शाकपार्थिवादिः। सारङ्गः पुंसि हरिणे चातके च मतङ्गज इति मेदिनीकारः। अत्र वीरो रसः।

* मालतीगृहकथाकथनायाह। भो इति। अप्रतिहतेति सत्यवचनेत्यर्थः। एतेनाघोरघण्टकृती मालत्यपहार इति कामन्दकीवचनं सत्यम्। मालतीमाधवयोश्च विवाहः सत्य इति पश्चाद्भावतार इति सूचितम्। पर्यवष्टम्भनं सर्वतो वेष्टनम्।

(३२) नेत्यादि। एतत् कर्म मालत्यपहरणात्मकं भीषणं हिंस्रं अद्भुतं बहुरक्षकरक्षिताया अपि हरणात्।

† स्त्रीत्वाशयेन पलायनेच्छुराह। भगवन्निति।

‡ संग्रामादपसरणस्य अधर्महेतुतया सात्त्विकतया चाह। सम्प्रतीति।

माल। हा ताद! हा भअवदि! (छ) *।

माध। भवतु, बान्धवसमाजसुस्थितां मालतीं विधाय, तत्समक्षमेनं दुरात्मानं व्यापादयामि।

[ मालतीमन्यतः कापालिकश्चान्यतः प्रेरयन् परिक्रामति †। ]

माधवाघोरघण्टौ। [अन्योन्यमुद्दिश्य।] आः पाप!

कठोरास्थिग्रन्थिव्यतिकररणत्कारमुखरः,
खरस्नायुच्छेदक्षणविहितवेगव्युपशमः।
निरातङ्कः पङ्केष्विव पिशितपिण्डेषु विलस-
न्नसिर्गात्रं गात्रं सपदि लवशस्ते विकिरतु॥ (३२)

इति निष्क्रान्ताः सर्वे।

मालतीमाधवे पञ्चमोऽङ्कः।

---

(छ) हा तात! हा भगवति!

---

पौरुषं पुरुषस्य व्यापारस्तेजो वा। पौरुषं पुरुषस्योक्तं भावे कर्मणि तेजसीति विश्वः।

* मालती तत्रावेगातिशयादाह। हा तात! हा भगवति! इति।

† मालतीरक्षार्थं कापालिको मया हत इति अमात्यो जानातु इत्याशयेन मालतीं च कातरां वीक्ष्याह भवत्विति। बान्धवेत्यादिना भाविकार्य्योपयोग उक्तः। अन्यतः कापालिकादन्यदेशं स्वसंमुखमिति यावत्।

(३२) द्वावप्येकश्लोकेन प्रहारव्यापारमाहतुः। कठोरेत्यादि। हे पाप! कर्दमेष्विव मांसपिण्डेषु निरातङ्को निर्भयः यथारुचि विचरन् सन्। तथा कठोरास्थिग्रन्थिव्यतिकरेण कठिनास्थिग्रन्थिघटनेन यो रणत्कारो व्यक्तध्वनिः तेन मुखरः सशब्दः। खरस्नायुच्छेदेषु कठिनस्नायुच्छेदेषु क्षणं मुहूर्तं विहितवेगव्युपशमः कृतवेगोपरमश्च मम असिः खड्गस्तव गात्रं गात्रं प्रत्यङ्गं लवशः खण्डं खण्डं सपदि इदानीमेव विकिरतु विक्षिपतु।

# षष्ठोऽङ्कः ।

—:०:—

ततः प्रविशति कपालकुण्डला ।

कपा । आः दुरात्मन् ! मालतीनिमित्तं व्यापादितास्मद्गुरो ! माधवहतक ! अहं त्वया तस्मिन्नवसरे निर्दयं निघ्नती अपि स्त्रीति अवज्ञाता । [ सक्रोधम् । ] तदवश्यमनुभविष्यसि कपालकुण्डलाकोपस्य विजृम्भितम् ।

शान्तिः कुतस्तस्य भुजङ्गशत्रोर्यस्मिन्नमुक्तानुशया सदैव ।
जागर्त्ति दंशाय निशातदंष्ट्राकोटिर्विषोद्गारगुरुर्भुजङ्गी ॥ (१)

[नेपथ्ये ।] भो राजान ! स्थविरमवयसामाज्ञया सञ्चरध्वम्,
कर्त्तव्येषु, श्रवणसुभगं भूमिदेवाः पठन्तु ।
चित्रं नानारचननिवहैश्चेष्ट्यतां मङ्गलेभ्यः,
प्रत्यासन्नस्त्वरयतितरां जन्ययात्राप्रवेशः ॥ (२)

---

(१) शान्तिरिति । यस्मिन् भुजङ्गशत्रौ गरुडे अमुक्तानुशया अपरित्यक्तकोपा, निशाता द्रंष्ट्राकोटिर्दन्ताग्रभागो यस्याः सा, विषोद्गारगुरुर्गरलोद्गारेण कठिना भुजङ्गी फणिनी दंशाय दंशनाय सदैव जागर्त्ति उद्युङ्क्ते तस्य भुजङ्गशत्रोर्गरुडस्य कुतः शान्तिः सुखमयुक्तमित्यर्थः ।

(२) भो इति । भो राजानो नृपाः ! चरमवयसां वृद्धानामाज्ञया कर्त्तव्येषु वैवाहिककर्त्तव्यविषयेषु सञ्चरध्वं प्रवर्त्तध्वम् भूमिदेवा भूसुराः श्रवणसुभगं यथा भवति तथा पठन्तु वेदमित्यर्थः । नानारचननिवहैर्विविधरचनाचातुर्य्यकौशलैः चित्रं यथा तथा मङ्गलेभ्यो मङ्गलजनककार्य्येभ्यः क्रियार्थोपादानाच्चतुर्थी । चेष्टतां जनैरित्यर्थः । तथा प्रत्यासन्न उपस्थितः जन्ययात्राप्रवेशः जन्यानां वरस्य स्निग्धानां यात्राप्रवेशः प्रयाणजन्यलोकसमागमः त्वरयतितराम् अतिशयेन त्वरयति अस्मान् इत्यर्थः ।

यावत् सम्बन्धिनो न परापतन्ति, तावत् वत्सया मालत्या सह नगरदेवतागृहम् अविघ्नमङ्गलाय गन्तव्यम् इति आदिशन्ति भगवतीनिदेशवर्त्तिनोऽमात्यदाराः। तथा गृहीतसविशेषमण्डनः प्रतीच्यतामानुयात्रिको जनः।

कपा। भवतु इतो मालतीविवाहपरिकर्मसत्वरप्रतीहारशतसङ्कुलादस्मात्प्रदेशादपक्रम्य, माधवापकारं प्रति अभिनिविष्टा भवामि। [ इति निष्क्रान्ता। विष्कम्भकः। ]

[ ततः प्रविशति कलहंसकः। ]

आणत्तोम्हि, णअरदेबदागब्भघरत्थिदेण समअरन्देण, णाहमाहवेण, जहा जाणाहि दाव जत्ताहिमुहं पउत्ता मालदी ण बेति, ता जाव णं आणन्दइस्सं (क)।

ततः प्रविशती माधवमकरन्दौ।

माध। मालत्याः प्रथमावलोकनदिनादारभ्य विस्तारितै-
भूंयः स्नेहविचेष्टितैर्मृगदृशो नीतस्य कोटिं पराम्।
अद्यान्तः खलु सर्वथास्य मदनायासप्रबन्धस्य मे,
कल्याणं विदधातु वा भगवती नीतिर्विपर्य्येतु वा॥ (३)

---

(क) आज्ञप्तोऽस्मि, नगरदेवतागर्भगृहस्थितेन समकरन्देन नाथमाधवेन, यथा जानीहि तावत् यात्राभिमुखं प्रवृत्ता मालती न वेति, तद्यावदेनम् आनन्दयिष्यामि।

---

(३) मालत्या इति। मृगदृशो मृगाक्ष्या मालत्याः प्रथमावलोकनदिनात् वकुलवीथ्यां प्रथमदर्शनादारभ्य विस्तारितैर्भूयः पुनरपि चित्रसन्दर्शनरूपैः स्नेहविचेष्टितैः परामधिकां कोटिम् उत्कर्षं नीतस्य प्रापितस्य मे मम अस्य मदनायासप्रबन्धस्य सर्वथा सर्वप्रकारेण अद्य अन्तोऽवसानं खलूत्प्रेक्षे। पूर्वसङ्कल्पितकामप्रबन्धस्य वैफल्यं जातमित्यर्थः। पक्षान्तरमाह भगवती कामन्दकी कल्याणं चेमं विद-

मक। वयस्य! कथं हि भगवत्याः सुमेधसो नीतिर्वि-पर्य्ययमेष्यति।

कल। [ उपसृत्य। ] णाह माहव! दिट्ठिआ बड्ढसि, पउत्ता क्खु जत्ताहिमुहं मालदित्ति। (ख)

माध। अपि नाम सत्यम्?

मक। सखे! किमश्रद्दधान इव पृच्छसि, न केवलं प्रवृत्ता, प्रत्यासन्ना च वर्त्तते। तथाहि।

अस्माक मेकपद एव मरुद्विकीर्ण-
जीमूतजालरसितानुकृतिर्निनादः।
गम्भीरमङ्गलमृदङ्गसहस्रजन्मा
शब्दान्तरग्रहणशक्तिमपाकरोति॥ (४)

तदेहि जालमार्गेण पश्यामः। [ तथा कुर्वन्ति। ]

कल। णाह! पेक्खस्स, पेक्खस्स, इमेअ दाव उप्पडिअ-राअहंस विब्भमाहिराम-चामरसमीरणोव्वेल्लकदलिआवलि-तरङ्गिदुत्ताल-गअणङ्गण-सरोवर--णिरन्तरुद्दण्ड--पुण्डरीअविब्-भमं वहन्तो, धवलादवत्तणिवहा दीसन्ति। एदाअ

---

(ख) नाथ! दिष्ट्या वर्द्धसे प्रवृत्ता खलु यात्राभिमुखं मालतीति।

---

धातु वा करोतु वा नीतिर्नयः विपर्य्येतु वैपरीत्यं गच्छतु वा। यदि भगवती अनुकम्पेत तदा साफल्यं, नीतिध्वंसे च तदापि मरणेन साफल्यमिति तात्पर्य्यार्थः।

(४) अस्माकमित्यादि। मरुद्विकीर्ण जीमूतजालरसितानुकृतिः वातविस्तारि-मेघसमूहशब्दिततुल्यो गम्भीरमङ्गलमृदङ्गसहस्रजन्मा गम्भीरमङ्गलार्थमुरजसहस्र-जन्मा निनादः शब्द एकपदे एकस्मिन् चणेऽस्माकं शब्दान्तरग्रहणशक्तिं श्रन्यान्तर-श्रवणसामर्थ्यं निराकरोति। वाद्यरवेणान्यशब्दो न श्रूयत इत्यर्थः। सहस्रग्रहण-मनेकोपलक्षणम् सहस्रपत्रवत्।

सविलास-कवलिद-तंबूल-बीड़िआपूरिद-कबोल-मण्डलाभोअ-वइअर-क्खलिद-महुरमङ्गलुग्गीद-बद्ध-कोलाहलेहिं विविहर-अणालङ्कार-किरणावली-विडम्बिद-महिन्द-चाव-खण्ड विच्छे-अविच्छुरिअ-णहत्थलेहिं, वारसुन्दरीकदम्बेहिं अज्झासिआ, कणन्त-कणअकिंकि-णीजाल-झणझणझङ्कारिणीओ करि-णीओ (ग) *।

माधवमकरन्दौ। सकौतुकं पश्यतः।

मक। रमणीयाः खलु अमात्यभूरिवसोर्विभूतयः। तथाहि।

प्रेङ्खद्भूरिमयूरमेचकचयैरुन्मेषिचापच्छद-

च्छायासंवलितैर्विवर्त्तिभिरिव प्रान्तेषु पर्य्याहृताः।

---

(ग) नाथ! पश्य, पश्य एते तावदुत्पतितराजहंसविभ्रमाभिरामचामर-समीरणोद्वेल्लत्कदलिकावलीतरङ्गितोत्तालगगनाङ्गनसरोवरनिरन्तरोद्दण्डपुण्डरीक-विभ्रमं वहन्तो, धवलातपत्रनिवहा दृश्यन्ते। एताश्च सविलासकवलितताम्बूल-वीटिकापूरितकपोलमण्डलाभोग-व्यतिकरस्खलित--मधुरमङ्गलगीत--बद्धकोलाहलै-र्विविधरत्नालङ्कार-किरणावलीविडम्बित--महेन्द्रचापविच्छेदविच्छुरितनभःस्थलैर्वार-सुन्दरीकदम्बैरध्यासिताः क्वणत्कनककिङ्किणीजालझणझणझङ्कारिण्यः करिण्यः।

---

* माधवोत्साहार्थमाह नाथेति। अत्र उत्पतितः उड्डीनः। विभ्रमो विलासो विशिष्टभ्रमणं वा। अभिरामः मनोहरः। उद्वेल्लन् कम्पमानः। कद-लिका पताका। तरङ्गितः तरङ्गयुक्तः। तेन उत्तालः गगनमेव सरोवरः। तस्य उद्दण्डमुन्नतदण्डम् पुण्डरीकं पद्मं तस्य विभ्रमं विलासं वहन्तः धारयन्तः। आतपत्रं छत्रम्। मङ्गलातपत्रमिति पाठे विवाहे शुक्लच्छत्रस्य प्रशस्ततया मङ्गल-पदेन श्वेतत्वमुक्तम्। एताः करिण्यश्च दृश्यन्त इत्यन्वयः। चकारोऽत्राध्याहर्त्तव्यः। चर्वितं भक्षितम्। व्यतिकरः सङ्घट्टः। स्खलितं भङ्गिमत्। मङ्गलोद्गीतं मङ्गल-रूपमुच्चैर्गानम्। विडम्बितं सदृशीकृतम्। विच्छेदः खण्डः। विच्छुरितं व्याप्तम्। झणझणारूपो झङ्कारशब्दः।

(५) प्रेङ्खदित्यादि। तरणिकिरणसम्पर्कादूर्द्ध्वमुखैर्मणिदीप्तिसङ्घैर्विवर्त्तिभिः

व्यक्ताखण्डलकार्मुका इव भवन्त्युच्चित्रचीनांशुक-
प्रस्तारस्थगिता इवोन्मुखमणिज्योतिर्वितानैर्दिशः॥ (५)

कल। कधं, ससम्भमाणेक्क पडिहार-मण्डलावज्जिदुज्जल कणअ-कलहोअ-पङ्क-विचित्त--वेत्त--लदा-परिक्खित्त--रेहा--रइ-द-मण्डलो दूरदो ज्जेव्व से संट्ठिदो परिअणो। एसा अ बहुल-सिन्दूर--णिअर--सञ्झा--राओवरत्त-चडुल-मुह--घोलन्त--कन्त-णक्खत्त-मालाभरण-धारिणिं करेणुरअणिं अलङ्करन्ती, इदो ज्जेव्व कोदूहलुम्मुह-समत्थ-लोअ-दीसन्त-मणुहरा, पांडुर-परिक्खाम-देहसोहा, पढम-चन्द-लेहा-बिब्भमं बहन्ती किञ्चिअन्तरं पसरिदा मालती (घ) *।

मक। वयस्य! पश्य पश्य।

---

(घ) कथं ससम्भ्रमानेकप्रतिहारमण्डलावर्जितोज्ज्वलकनककलधौतपङ्कविचित्रवेत्रलतापरिक्षिप्तरेखारचितमण्डलो दूरत एव संस्थितोऽस्याः परिजनः। एषा च बहुलसिन्दूरनिकरसन्ध्यारागोपरक्तचटुलमुखघूर्णत्कान्तनक्षत्रमालाभरणधारिणीं करेणुरजनीम् अलङ्कुर्वती, इत एव कौतूहलोन्मुखसमस्तलोकदृश्यमानमनोहरा, पाण्डुरपरिक्षामदेहशोभा, प्रथमचन्द्रलेखाविभ्रमं वहन्ती, किञ्चिदन्तरे प्रसृता मालती।

---

इतस्ततो गतैः प्रान्तेषु निकटेषु पर्य्यावृता व्याप्ता इव दिशो व्यक्तेन्द्रचापा इव भवन्ति। कीदृशैः। प्रेङ्खन्तः इतस्ततश्चलन्तो भूरीणां सुवर्णानां मयूखाः किरणा यत्र तादृशो मेचकः स्निग्धश्यामो येषु तैः। मयूरमेचकनिभैरिति पाठे प्रेङ्खन्नृत्यन् यो भूरिमयूरः बहुलमयूरस्तस्य मेचकाश्चन्द्रकास्तैरतिशयिता भा येषां तैः। मेचकश्चन्द्रके स्निग्धे श्यामलेऽपि च दृश्यत इति विश्वः। भूरि क्लीबं सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गकेइति मेदिनीकारः। उन्मुखुण्डीनो यशायः पक्षिभेदस्तस्य छदच्छायया पक्षकान्त्या संवलितैरिव मिलितैः इव। कीदृश्यः। उन्नतचित्रस्य चीनदेशभववस्त्रस्य प्रस्तारेण शय्यया प्रसारेण वा स्थगिताः छन्ना इव। प्रस्तारस्तानितं शय्येति हारावली। मणय इन्द्राभरणस्थरत्नानि।

* अवावर्जिता तिर्य्यक्कृता। कनकं हिरण्मय्। कलधौतं रजतम्।

इयमवयवैः पाण्डुक्षामैरलङ्कृतमण्डना
कलितकुसुमा बालेवान्तर्लता परिशोषिणी।
वहति च वरारोहा रम्यां विवाहमहोत्सव-
श्रियमुदयिनीमुद्गाढां च व्यनक्ति मनोरुजम्॥ (६)

कथं निषादिता * गजवधूः?

माध। [सानन्दम्।] कथमवतीर्य्य भगवतीलवङ्गिकाभ्यां समम् इतः प्रवृत्तैव।

ततः प्रविशति कामन्दकी मालती लवङ्गिका च।

काम। [सहर्षमपवार्य्य।]

---

कलधौतं हेमरौप्ययोरिति विश्वः। पङ्केन लेपेन। वेत्रलता वेत्रदण्डिका। परिक्षिप्ता रचिता। मण्डल इति। अस्मात् मण्डलात् केनापि न वहिर्गन्तव्यमिति भावः। दूरत एव मालत्या इत्यर्थात्। पृथुसिन्दूरपूर एव सन्ध्यारागस्तेन उपरक्ता किञ्चिदारक्ता चटुला चपला घूर्णती लम्बमाना या नक्षत्रमाला सप्तविंशतिमौक्तिकमाला हस्तिप्रसाधनभेदो वा सैवाभरणं सन्धारिणीम्। रात्रिपक्षे नक्षत्रमाला तारकामाला। करेणुर्हस्तिनी सैव रात्रिस्ताम्। दृश्यमाना चासौ मनोहरा चेति समासः। पाण्डुरा धूसरा परिक्षामा अतिकृशा अङ्गदीप्तिर्यस्याः सा। एतेन चन्द्रकलासाम्यमुक्तम्। दृश्यमाना इत्यनेन अन्येषां दर्शनमात्रं तव परमुपभोगो मालत्या इति सूचितम्। पाण्डुरेत्यादिना मालत्यामान्तर उद्वेग उक्तः। किञ्चिदन्तरं कियद्दूरम्। प्रस्थिता गता। कलधौतटङ्कपत्रेति पाठे टङ्कपत्रं पट्टिकेत्यर्थः।

(६) इयमिति। पाण्डुभिः क्षामैः कृशैश्च अवयवैरङ्गैः अलङ्कृतमण्डना भूषितालङ्कारा अलङ्कारमपि अलङ्कुर्वतीत्यर्थः। अन्तरभ्यरे परिशोषिणी शोषणतां गता कलितकुसुमा धृतपुष्पा लतेवेयं वरारोहा उत्तमाङ्गना मालती रम्यां मनोहरां विवाहमहोत्सवश्रियं वहति च धत्ते च उदयिनीमुत्थितामत एवोद्गाढां गभीरां मनोरुजं मनोव्यथां व्यनक्ति च ज्ञापयति च। वसन्तकाले सपुष्पा नवा लता कुतश्चित् वैकृतात् यथा अन्तः शोषं धारयति तथा मालती अपि इति भावः। कुसुमवत्त्वात् शुष्कत्वाच्च लतासाम्यमतः सादृश्याक्षेपान्निदर्शना।

* निषादिता उपवेशिता अवतारणार्थमितिभावः।

विधाता भद्रं नो वितरतु मनोज्ञाय विधये,
विधेयासुर्देवाः परमरमणीयां परिणतिम्।
कृतार्थीभूयासं प्रियसुहृदपत्योपयमने,
प्रयत्नः कृत्स्नोऽयं फलतु, शिवदायी च भवतु॥ (७)

माल। [स्वगतम्।] केण उण उवाएण सम्पदं मरणणिव्वाणस्स अन्तरं सम्भावइस्सं? मरणम्मि मन्दभाअहेआणं अहिमदंत्ति सुदुल्लहं होदि (ङ)।

लव। [स्वगतम्।] अतिकिलाम्मिदा क्खु पिअसही एदिणा अणुऊलविप्पलम्भेण * (च)।

[प्रविश्य पेटकहस्ता प्रतीहारी।] अमच्चो भअवदीं विस्सवेदि, एदिणा णलिन्दाणुप्पेसिदेण बिबाहणेवच्छेण देवदापुरदो अलङ्करिदव्वा मालदित्ति (छ)।

---

(ङ) केन पुनः उपायेन साम्प्रतं मरणनिर्वाणस्यान्तरं सम्भावयिष्ये? मरणमपि मन्दभागधेयानामभिमतमिति सुदुर्लभं भवति।

(च) अतिक्लामिता खलु प्रियसखी एतेन अनुकूलविप्रलम्भेण।

(छ) अमात्यो भगवतीं विज्ञापयति, एतेन नरेन्द्रानुप्रेषितेन विवाहनेपथ्येन देवतापुरतोऽलङ्कर्तव्या मालती इति।

---

(७) विधातेति। विधाता स्रष्टा मनोज्ञाय प्रतिबन्धकशून्याय विधये विधानाय प्रकृतविवाहाय नोऽस्मभ्यं भद्रं वितरतु ददातु इत्याशीरर्थे भद्रशब्दयोगे चतुर्थी। वृत्तेऽपि विवाहे नृपतिविरोधात् अनिष्टमाशङ्क्य आशीर्वादेनाह। देवाः परमरमणीयामतिशोभनां परिणतिं परिणामं विधेयासुः क्रियासुरित्यर्थः। प्रियसुहृदपत्यस्य माधवस्य उपयमने विवाहे अहं कृतार्थो कृतकार्य्यो भूयासं भविष्यामीत्यर्थः अभूततद्भावे च्विः। अयं मया सम्पाद्यमानः कृत्स्नः सकलः प्रयत्नः फलतु शिवदायी च कल्याणकारकश्च भवतु।

* अनुकूलो माधवः तेन सह विप्रलम्भः विरहः तेन।

काम। युक्तमाह अमात्यः, माङ्गलिकमेतत् स्थानम् अतो दर्शय।

प्रती। इदं दाव धवलपट्टंसुअचोलअं, इदं च उत्तरीअं रत्तवस्सांसुअं इमे अ सव्वङ्गिआ आहरण-सञ्जोआ, अअं च मोत्तिआहारो, एदं चन्दणं, कुसुमापीडं अ (ज)।

काम। [अपवार्य्य।] रमणीयं हि वत्समकरन्दम् अवलोकयिष्यति मदयन्तिका। [प्रकाशं गृहीत्वा।] भवतु ओम् इति उच्यताममात्यः।

प्रतिहारी। तथा।

इति निष्क्रान्ता।

काम। वत्से लवङ्गिके! प्रविश त्वम् अभ्यन्तरं वत्सया मालत्या सह।

लव। अध भअवदी उण कहिम्? (झ)

काम। अहमपि तावद्विविक्ते अलङ्करणरत्नानां प्राशस्त्यं शास्त्रतः परीक्षिष्ये। [इति निष्क्रान्ता।]

माल। [स्वगतम्।] कधं, लवङ्गिआमेत्तपरिवारम्हि संवुत्ता। (ञ)

लव। इदं देवदामन्दिरदुवारं ता पविसह्म। (ट)

[इति प्रविशतः।]

मक। वयस्य! इतः स्तम्भापवारितशरीरौ तिष्ठावः।

---

(ज) इदं तावद्धवलपट्टांशुकचोलकं इदञ्चोत्तरीयं रक्तवर्णांशुकम्, इमे च सर्वाङ्गिका आभरणसंयोगाः, अयञ्च मौक्तिकाहारः, इदं चन्दनं कुसुमापीडञ्च।

(झ) अथ भगवती पुनः क्व?

(ञ) लवङ्गिकामात्रपरिवारास्मि संवृत्ता।

(ट) एतद्देवतामन्दिरद्वारं तत् प्रविशावः।

[ तथा कुरुतः । ]

लव । सहि! अग्रं अङ्गराओ, इमाओ कुसुममालाओ । (ट)

माल । तदो किं ? (ड)

लव । सहि ! इमस्सिं पाणिग्गहणमङ्गलारम्भे, कल्लाण-सम्पत्तिणिमित्तं देवदाओ पूजेहित्ति, अम्बाए अणुप्पेसिदासि (ढ) ।

माल । किं दाणिं दारुणसमारम्भदेव्वदुव्विलासपरिणामदुःख-णिद्दड्ढ-माणसं पुणो पुणो वि मम्म-च्छेअ-दुःसहं मन्दभाइणीं दुणोसि (ण) ।

लव । अह किं वत्तुकामासि ? (त)

माल । जं दाणिं दुल्लहाहिणिवेसिमणोरहविसंवदन्त-भाअधेओ * जणो मन्तेदि (थ) ।

मक । सखे ! श्रुतम् ।

माध । श्रुतमसन्तोषस्य हृदयस्य ।

माल । [लवङ्गिकां परिष्वज्य ।] ता, परमत्थवहिणि पिअ-

---

(ट) सखि ! अयमङ्गराग इमाः कुसुममालाः ।

(ड) ततः किम् ?

(ढ) सखि ! अस्मिन् पाणिग्रहणमङ्गलारम्भे, कल्याणसम्पत्तिनिमित्तं देवताः पूजयेति, अम्बया अनुप्रेषितासि ।

(ण) किमिदानीं दारुणसमारम्भदैवदुर्विलासपरिणामदुःखनिर्दग्धमानसां पुनः पुनर्मर्मच्छेददुःसहां मन्दभागिनीं दुनोषि ।

(त) अथ किमसि वक्तुकामा ?

(थ) यदिदानीं दुर्लभाभिनिवेशिमनोरथविसंवदत्भागधेयो जनो मन्त्रयते ।

---

* दुर्लभे माधवे अभिनिवेशिनः मनोरथस्य विसंवदत् प्रतिकूलं भागधेयं भाग्यं यस्य सः । अहमित्यर्थः ।

सहि लवङ्गिए ! एसा दाणिं दे पिअसही अणाहा, मरणे वट्ट-माणा आगब्भ-णिग्गम--णिम्मिद-णिरन्तरोपआर--विरूढ-वीसम्भ-सरिसं परिस्सइअ तुमं पत्थेदि, जइ दे अहं अणुवट्टणीआ,* तदो मं हिअएण धारअन्ती, समग्ग-सोभग्ग-लच्छीपरिग्गहेक-मङ्गलं माहवसिरिणो मुहारविन्दं आणन्दमसिणं अवलोअ-इस्ससि (द)

इति रोदिति ।

माध । वयस्य मकरन्द !

म्लानस्य जीवकुसुमस्य विकाशनानि,
सन्तर्पणानि सकलेन्द्रियमोहनानि ।
आनन्दनानि हृदयैकरसायनानि,
दिष्ट्या मयाप्यधिगतानि वचोऽमृतानि ॥ (८)

---

(द) तत्परमार्थभगिनि प्रियसखि लवङ्गिके ! एषा इदानीं ते प्रियसखी अनाथा, मरणे वर्त्तमाना, आगर्भतो निरन्तरोपकारविरूढविश्रम्भसदृशं परिष्वज्य त्वां प्रार्थयते, यदि ते अहमनुवर्त्तनीया ततो मां हृदयेन धारयन्ती समग्रसौभाग्यलक्ष्मीपरिग्रहैकमङ्गलं माधवश्रियो मुखारविन्दम् आनन्दमसृणमवलोकयिष्यसि ।

---

* अनुवर्त्तनीया उपकर्त्तव्या ।

(८) म्लानस्येत्यादि । वचांस्येवामृतानि मयापि दिष्ट्या निर्णीतानि । त्वया श्रुतमित्यादिना निर्णीतानि मया तु अधुनेत्यपिपदार्थः । अमृततुल्यत्वमाह । म्लानस्य प्रत्याशाभङ्गज्ञानेन सङ्कोचितस्य जीवपुष्पस्य विकाशनानि प्रकाशनानि । अमृतेऽपि सर्वप्रकाशकतया म्लानपुष्पप्रकाशकत्वम् । सन्तर्पणानि तृप्तिकराणि । अमृतेऽप्येवम् । सन्तर्पणे सति बाह्येन्द्रियतर्पकाणि । अमृतेऽप्येवम् । आनन्दनानि अन्तर्मोदकानि । आश्यते आनीयते अनेनेत्यायनम् । रसस्यायनं रसायनम् । वचसां चित्तोल्लासकत्वेन नवत्वजननादिव अमृतस्य जरादिनाशकत्वेन नवत्वजननादिदमिति भावः । यद्वा । अमृतपदेन जलमोक्षपीयूषाणि उच्यन्ते । तत्राद्यपदेन जलसाम्यम् । मोक्षसाम्यार्थमितरपदत्रयम् । मोक्षे हि सम्यक्तृप्तिविषये

माल। जह्य तस्स जीविदप्पदाइणो जणस्स, अवसिदेत्ति मं सुणिअ सन्तप्पमाणस्स, तं तहाविहं सरीररअणं ण परिहीअदि, जधा अ परलोअगदं पि मं उद्दिसिअ सो जणो संस्सरणकधामेत्तपरिसेसं कालन्तरेवि लोअजत्तं न सिढिलेदि तह्य करेसि। एवं ज्जेव पिअसहीए प्पसादादो मालदी किदत्था भोदि (ध)।

मक। हन्त! अतिकरुणं वर्त्तते।

माध। नैराश्यकातरधियो हरिणेक्षणाया:
श्रुत्वा निकामकरुणञ्च मनोहरञ्च।
वात्सल्यमोहपरिदेवितमुद्वहामि,
चिन्ताविषादविपदञ्च महोत्सवञ्च ॥ (८)

लव। अइ! पडिहदं दाणिं दे अमङ्गलं ण अदोवि अधिअदरं सुणिस्सम्। (न)

---

(ध) यथा तस्य जीवितप्रदायिनो जनस्य अवसितेति मां श्रुत्वा सन्तप्यमानस्य, तत्तथाविधं शरीररत्नं न परिहीयते, यथा च मां परलोकगतामप्युद्दिश्य स जन: संस्मरणकथामात्रपरिशेषां कालान्तरेऽपि लोकयात्रां न शिथिलयति, तथा करिष्यसि, एवमेव प्रियसखीप्रसादात् मालती कृतार्था भवति।

(न) अयि प्रतिहतम् इदानीं तेऽमङ्गलम्। नातोऽप्यधिकतरं श्रोष्यामि।

---

निराकाङ्क्षतैव। इन्द्रियमोहेऽपि विषयग्रहाभावात्। आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम्। इति श्रुतेरानन्दमयता मोक्षे। यद्वा। आद्यपदाभ्यां जलसाम्यमितरपदाभ्यां मोक्षसाम्यम्। पीयूषसाम्यार्थं शेषपदम्। अमृतं मोक्षपीयूषसलिलेषु घृतेऽपि चेति धरणि:।

(८) नैराश्येति। नैराश्येन दुराशया कातरा व्याकुला धी: अन्त:करणं यस्यास्तस्या हरिणेक्षणाया मालत्या निकामकरुणञ्च दयापरिपूर्णञ्च मनोहरञ्च वात्सल्यमोहपरिदेवितं वात्सल्यमोहजनितविलापं श्रुत्वा चिन्तया विषादेन च या विपद्च तां महोत्सवमानन्दञ्च उद्वहामि लभे।

माल। सहि! पिअं क्खु तुह्माणं मालदीजीविदं, ण उण मालदी। (प)

लव। किं एव्वं भणिदे भोदि। (फ)

माल। [आत्मानं निर्दिश्य।] जेण अण्णजणपच्चासाणिबन्धणेहिं वअणसंविहाणेहिं जीआविअ इमं ज्जेव्व महाबीभच्छारम्भं अणुभाविदह्मि, सम्पदं उण मम मणोरहो एसोज्जेव्व जं तस्स देवस्स परोक्खगुणकित्तणेण अणवरद्धं अत्ताणं परिचइस्संत्ति, ता, इमस्सिं पओअणे पिअसही मे अपरिपन्थिणी होदु (ब)।

इति पादयोः पतति।

मक। सैषा सीमा स्नेहस्य।

लवङ्गिका। माधवं संज्ञया समाह्वयति।

मक। वयस्य! उपसृत्य लवङ्गिकायाः स्थाने तिष्ठ।

माध। वयस्य! परवानस्मि साध्वसेन।

मक। इयमेव नेदीयसां प्रकृतिरभ्युदयानाम्।

माधवः। स्वैरं लवङ्गिकास्थाने तिष्ठति।

माल। सहि! करेहि अणुऊलदाए पसादं (भ)।

---

(प) सखि! प्रियं खलु युष्माकं मालतीजीवितं न पुनर्मालती।

(फ) किमेवं भणिते भवति।

(ब) येन अन्यजनप्रत्याशानिबन्धनैर्वचनसंविधानैर्जीवयित्वा इममेव महाबीभत्सारम्भमनुभावितास्मि। साम्प्रतं पुनर्मम मनोरथ एष एव यत्, तस्य देवस्य परोक्षगुणकीर्त्तनेन अनपराद्धमात्मानं परित्यक्ष्यामीति। तदस्मिन् प्रयोजने प्रियसखी मे अपरिपन्थिनी भवतु।

(भ) सखि! कुरु अनुकूलतया प्रसादम्।

माध। सरले ! साहसरागं परिहर, रम्भोरु ! मुञ्च संरम्भम्।
विरसं विरहायासं, सोढुं तव चित्तमसहं मे ॥ (१०)
माल। सहि ! अलंघणीओ ज्जेव्व दे मालदीप्पणामो। (म)
माध। सहर्षं। किं वा भणामि विच्छेददारुणायासकारिणि !
कामं कुरु वरारोहे ! देहि मे परिरम्भणम् ॥ (११)
माल। [सहर्षम्।] कधं अणुगहीदह्मि। [उत्थाय।] इअमालिङ्गामि। दंसणं उण पिअसहीए बाप्फोपीड़ेण णिरुद्धं पच्छिमं ण लम्भीअदि। * [आलिङ्ग्य सानन्दम्। ] सहि !

---

(म) सखि ! अलङ्घनीय एव ते मालतीप्रणामः।
(य) कथमनुगृहीतास्मि। इयमालिङ्गामि। दर्शनं पुनः प्रियसख्या वाष्पोत्-

---

(१०) माधवस्य संस्कृतभाषया लवङ्गिकाक्षमो न स्यादिति भाषासमावेशेनाह। सरले इत्यादि। साहसे आत्मनिरपेक्षकार्य्ये रागमनुरागं परिहर। हे रम्भोरु ! हे कदलीसमोरुदेशे ! संरम्भं मरणे त्वरां त्यज जीवन्त्यां प्रत्याशापि स्यादिति भावः। विरसं रसशून्यं तव विरहायासं विश्लेषदुःखं सोढुं मे चित्तम् असहम् अक्षमं। यतोऽयं वल्लभस्त्वयि सक्तः अतस्त्यज मरणाभिनिवेशमिति लवङ्गिकाभिप्रायः। अत एव सरले अज्ञे ऋजुप्रकृतिके वा। माधवपक्षे हे सरले ! अजानति तव विरहायासं सोढुं मे चित्तमसहमतस्तव समीपमागतोऽस्मि तन्मरणं त्यज। इतरत् सममेव। तदिह संस्कृतप्राकृतयोः साम्यात् प्राकृतसमकम्।

(११) किं वेत्यादि। किं वा भणामि। त्वदारम्भनिषेधं न करोमीत्यर्थः। हे विच्छेददारुणायासकारिणि ! हे विरहदुःसहकष्टकारिणि ! हे वरारोहे ! सुश्रोणि ! काममभीष्टं कुरु। यद्येवं तदा ममालिङ्गनं देहीति लवङ्गिकापक्षे। माधवपक्षे तु किं वा भणामि किं वक्तव्येन कामं कामव्यापारं कुरु। अतः परिरम्भणं देहि। आरोहः श्रोणिकाययोरिति धरणिः। श्लोकद्वयमिदं सौरसेन्या। यदाह स्पष्टार्थं लक्षणं प्रोक्तं सौरसेन्याः प्रपद्यतः। लक्षणं त्वेकमेवास्याः संस्कृतायदनूनता।

* अत्र उत्पीडः प्रवलीभूय निर्गमः। उत्पीडः समूहो वा। पश्चिमं चरमम्।

कठोरकमलगब्भपह्मलो अस्सारिसो ज्जेव्व दे अज्ज णिव्वावेदि मं सन्तप्पमाणं पिअसहीए सरीरप्फंसो। [सास्रम्।] किञ्च, मउलिविणिवेसिदञ्जली मम वअणेण विणावेसि तं जणं, जधा, ण मए मन्दभाइणीए, विअसन्तपुण्डरीअलच्छीविलास-हारिणो संपूणचन्दमण्डलाहिरामस्स मुहस्स दे सच्छन्ददंस-णेण सम्भाविदो चिरं महूसवो लोअणाणं। सुधामणोरहेहिं अ अविरदविअम्भमाणदुव्वारुव्वे अव्वईकरुव्वत्तमाणबन्धणं धारिअं हिअअम्। गमिआ अ वारंवारं सविसेसदूसहारम्भ-दूमणाइअसहीअणा सरीरसन्दावा, कधंवि अदिवाहिदा चन्दादवमलअमारुदप्पसुहा अणत्थपरम्परा, सम्पदं उण

---

पीड़ेन निरुद्धं पश्चिमं न लभ्यते। सखि! कठोरकमलगर्भपक्ष्मल: अन्यादृश एव ते अद्य निर्वापयति मां सन्तप्यमानां प्रियसख्या: शरीरस्पर्श:। किञ्च मौलिविनिवे-शिताञ्जलिर्मम वचनेन विज्ञापयिष्यसि तं जनं, यथा, न मया मन्दभाग्यया, विक-सत्पुण्डरीकलक्ष्मीविलासहारिण: सम्पूर्णचन्द्रमण्डलाभिरामस्य मुखस्य ते स्वच्छन्द-दर्शनेन सम्भावितश्चिरं महोत्सवो लोचनानाम्। सुधामनोरथैश्च अविरतविजृम्भमाण-दुर्वारोद्वेगव्यतिकरोद्वर्त्तमानबन्धनं धारितं हृदयम्। गमिताश्च वारंवारं सवि-

---

प्रियस्पर्शादाह्लादात् सहर्षम्। कठोरकमलगर्भो बीजकोश:। पक्ष्मली रोमा-श्चयोगात्। अन्यादृश इव अनुभूतसखीस्पर्शविधर्मा॰ ग्रशानानुभूतस्पर्शतुल्य:। निर्वापयति तापं शमयति। तथा तादृश: स्पर्श: शङ्काविषयोऽप्यव नेति निर्वेदात् साश्रुता। मण्डलपदं संपूर्णत्वार्थम्। चिरमित्यनेन स्वाधीनभर्तृकात्व-मुक्तम्। सुरतादिरसैर्यस्या बद्ध: पार्श्वगत: प्रिय:। सामोदगुणसंप्राप्ता भवेत् स्वाधीनभर्तृका। निवेद्य दु:खं सुखी भवेदिति पूर्वानुभूतदु:खं निवेदयति। अविरतेत्यादि। अविरतं विजृम्भमाणस्य दुर्वारस्य उद्वेगस्य व्यतिकरेण सम्पर्केण उद्वर्त्तमानमुन्मूलितं बन्धनं स्थैर्यं यस्य तत्। गमिताश्चेत्यादिना व्याध्यवस्थोक्ता।

णिरासह्मि संवुत्तेति, तुएवि पिअसहीए सव्वदा सुमरिदव्वह्मि। एसा अ सिरिमाहवसहत्थणिम्माणमणुहरा बउलमाला मालदीजीविदणिव्विसेसं पिअसहीए दट्ठव्वा सव्वधा हिअए धारणीएत्ति (य)। *

स्वकण्ठादपनीय माधवस्य हृदि विन्यस्यन्ती सहसा अपसृत्य साध्वसोत्कम्पं नाटयति।

माध। [अपवार्य्य।] हन्त!

एकीकृतस्त्वचि निषिक्त इवावपीड्य
निर्भुग्नपीनकुचकुड्मलयानया मे।
कर्पूरहारहरिचन्दनचन्द्रकान्त-
निष्यन्दशैवलमृणालहिमादिवर्गः॥ (१२)

---

शेषदुःसहारम्भदुर्मनायितसखीजनाः शरीरसन्तापाः, कथमपि अतिवाहिताः चन्द्रातपमलयमारुतप्रमुखा अनर्थपरम्पराः, साम्प्रतं पुनर्निराशास्मि संवृत्ता इति, त्वयापि प्रियसख्या सर्वदा स्मर्त्तव्यास्मि। एषा च श्रीमाधवस्वहस्तनिर्माणमनोहरा वकुलमाला मालतीजीवितनिर्विशेषं प्रियसख्या द्रष्टव्या, सर्वथा हृदये धारणीया इति।

---

अतिवाहिता अतिक्रान्ता। चन्द्रातप इति तापकारित्वादातपः। एतेषामनर्थत्वमाह भरतः। सम्भोगे ये सुखं कुर्य्युस्ते दुःखं विरहे भृशम्। इति। स्मर्त्तव्येत्यनेन करुणव्यभिचारिभावं स्मरणमाह। यदाह। व्यभिचारिणोऽस्य, निर्वेदो ग्लानिमरणव्याधिदैन्यभ्रमादयः॥ व्यभिचारिणोऽस्य, निर्वेदो ग्लानिमरणव्याधिदैन्यभ्रमादयः॥ नैराश्याच्च मरणोदयः। यदाह। सर्वैरेतैः प्रतीकारैर्यदि नास्ति समागमः। कामाग्निना प्रदीप्ताया जायते मरणं ततः॥ विप्रलम्भकरुणानन्तरं स्थायिनः शृङ्गारस्योपक्रममाह। एषा चेति। साध्वसं भयम्।

(१२) एकीति। निर्भुग्नपीनकुचकुड्मलया कुञ्चितपीवरकुचमुकुलया अनया सालम्भा इत्यर्थः। कर्पूरहारहरिचन्दनचन्द्रकान्तानां निष्यन्दः द्रवः तथा शैवल-

माल। [स्वगतम्।] अहो! लवङ्गिआए मालदी विप्पलद्धा। (र)

माध। अयि! स्ववेदनासत्त्वनिवेदिनि! परव्यथान-भिज्ञे! इयमुपालभ्यसि।

उद्दामदेहपरिदाहमहाज्वराणि,
सङ्कल्पसङ्गमविनोदितवेदनानि।
त्वत्स्नेहसंविदवलम्बितजीवितानि,
किं वा मयापि न दिनान्यतिवाहितानि? ॥ (१३)

लव। सहि! उवालम्भणिज्जेव उवालद्धासि। (ल)

कल। अहो! सरसरमणीअदा संविहाणस्स। (व)

---

(र) अहो लवङ्गिकया मालती विप्रलब्धा।

(ल) सखि! उपालम्भनीयैवोपालब्धासि।

(व) अहो सरसरमणीयता संविधानस्य। संविधानकं नायिकासङ्घटन-प्रकारः।

---

मृणालहिमादीनां वर्गो राशिः एकीकृतः सन् मे मम त्वचि अवयवे अवपीड्य निष्पीड्य निषिक्त इव लेपित इवेत्युत्प्रेक्षा।

(१३) आत्मानुरागप्रकाशनाय अनुभूतवेदनामाह। अयीति उद्दामेत्यादि। एतादृशानि दिनानि मयापि किं वा न अतिक्रान्तानि। अपि तु अतिक्रान्तान्येव। किं वेति सम्भावनायाम्। यद्वा। किं निषेधे वा एवार्थे। कीदृशानि दिनानि। उद्दाम उत्कटो देहपरिदाह एव महाज्वरो येषु तानि। एतेनोद्वेग उक्तः। सङ्कल्प-सङ्गमेन मानसिकसङ्गमेन विनोदिता अपनीता वेदना व्यथा येषु तानि। अनेन उन्माद उक्तः। यदाह। बाह्यं प्रसार्य्य गमनं सङ्कल्पाकल्पिते प्रिये। निवृत्तिः सहसान्यस्मिन्नुन्मादे हि प्रजायते॥ यद्वा। सङ्कल्पसङ्गमेनान्यस्त्रीद्वेषः सूचितस्तेन च निःसपत्नीकत्वं कन्याहरणबीजमाह। यदाह। आसक्तिं वा दर्शयेत् सुखमनुपहत मेकपत्नीकत्वे वा वर्णयेदिति। त्वत्स्नेहसंविदा त्वदीयस्नेहज्ञानेन अवलम्बितं जीवितं येषु तानि। उपलक्ष्यितृसंविदित्यन्तरः।

मक । महाभागे ! एवमेतत् ।

त्वं वत्सलेति कथमप्यवलम्बितात्मा,
सत्यं जनोऽयमियतो दिवसाननैषीत् ।
आबद्धकङ्कणकरप्रणयप्रसाद-
मासाद्य, नन्दतु चिराय, फलन्तु कामाः ॥ (१४)

लव । महाणुभाव ! हिअए वि अपडिहदसअंगाहसाहसो अअं जणो, किं दाणिं कङ्कणाभरणं करं विआरेदि महाभाओ (अ) ?

माल । [स्वगतम् । ] हा हद्धी ! हद्धी हदह्मि, कस्सआअणविरुद्धं किम्पि एसा उवस्ससदि (प) ।

प्रविश्य कामन्दकी । पुत्रि ! कातरे ! किमेतत् ? ।

मालती । कम्पमाना कामन्दकीमालिङ्गति ।

काम । तस्याश्चिबुकम् उन्नमय्य ।

पुरश्चक्षूरागस्तदनु मनसोऽनन्यपरता,
तनुग्लानिर्यस्य त्वयि समभवद्यत्र च तव ।

---

(अ) महानुभाव ! हृदयेऽपि अप्रतिहतस्वयंग्राहसाहसोऽयं जनः किमिदानीं कङ्कणाभरणं करं विचारयति महाभागः । अप्रतिहतः परिगृहीतः स्वयं ग्राहसाहसः येन सः अयं जनः मालती । त्वं मालत्याः करं सहसा गृहाण इति तात्पर्य्यम् ।

(प) हा ! हा धिक् ! हा धिक् ! हतास्मि, कन्यकाजनविरुद्धं किमपि एषा उपन्यस्यति ।

---

(१४) त्वमित्यादि । त्वं वत्सला सस्नेहा इति हेतोरयं जनो माधवो विधृतजीवितः सन् सत्यमियद्दिनानि कथमप्यनैषीत् नीतवान् । अत आवद्धकङ्कणो धृतविवाहसूत्रो धृतविभूषणो वा यः करस्तस्य प्रणयो विवाहकाले ग्रहणं तद्रूपं प्रसादं आसाद्य प्राप्य नन्दतु । चिराय बहुकालम् कामाः अभीष्टाः सम्भोगादयः फलन्तु । कङ्कणं भूषणे सूत्र इति विश्वः ।

(१५) पूर इति । पुर आदौ चक्षूरागो नेत्रप्रीतिः तदनु तदनन्तरं मनसः

युवा सोऽयं, प्रेयानिह सुवदने! मुञ्च जडताम्
विधातुर्वैदग्ध्यं विलसतु, सकामोऽस्तु मदनः ॥ (१५)

लव। भअबदि! कसणचउद्दसीरअणीमसाणसञ्चरणणिबत्तिदविसमव्ववसाअणिट्ठापिअचण्डपासण्डपअण्डदोद्दण्डसाहसो साहसिओ क्खु एसो, अदो मे पिअसही उक्कम्पिदा (स)।

मक। [स्वगतम्।] साधु लवङ्गिके! साधु, अवसरे खलु अनुरागोपकारयोर्गरीयसोः उपन्यासः।

माल। हा ताद! हा अम्ब! (ह)

काम। वत्स माधव!।

माध। आज्ञापय।

काम। इयम् अग्रेपसामन्तसस्तकोत्तंसपरागरञ्जितचरणाङ्गुलेः अमात्यभूरिवसोः एकम् अपत्यरत्नं मालती, भगवता सदृशसंयोगरसिकेन वेधसा, मन्मथेन, मया च, तुभ्यं प्रदीयते।
[इति रोदिति।]

मक। फलितं हि नस्तर्हि भगवतीपादप्रसादेन।

---

(स) भगवति! कृष्णचतुर्दशीरजनीश्मशानसञ्चरणनिर्वर्तितविषमव्यवसायनिष्ठापितचण्डपाषण्डप्रचण्डदोर्दण्डसाहसः साहसिकः खलु एषः, अतो मे प्रियसखी उत्कम्पिता। विषमव्यवसायः महामांसविक्रयः। निष्ठापितः निहतः। पाषण्डः अघोरघण्टः। साहसिकाद्धि भयं भवति अतः मे सखी मालती उत्कम्पिता।

(ह) हा तात! हा अम्ब।

---

चित्तस्य अनन्यपरता एकाग्रत्वम्। यस्य त्वयि, तव च यत्र तनुग्लानिर्देहविषादः समभवत् अजनि प्रेयान् प्रियतमः सोऽयं युवा माधवः इह अत्र विद्यते इति शेषः। हे सुवदने! सुमुखि! जडतां देहजाड्यं मुञ्च त्यज, विधातुर्वैदग्ध्यं चातुर्थ्यं विलसतु मदनः कामः सकामः सफलमनोरथोऽस्तु।

माध। तत्किमिति वाष्पायितं भगवत्या ?।

काम।

[ चीवराञ्चलेन नेत्रे परिमृज्य । ]

विज्ञापयामि कल्याणिनम्।

माध। ननु आज्ञापय।

काम। परिणतिरमणीयाः प्रीतयस्त्वद्विधानाम्
अहमपि तव मान्या हेतुभिस्तैश्च तैश्च।
तदिह सुवदनायां तात! मत्तः परस्तात्-
परिचयकरुणायां सर्वथा मा विरंसीः॥ (१६)

इति पादयोः पतितुमिच्छति।

माध। [निवारयन्।] अहो! वात्सल्यादतिक्रामति प्रसङ्गः।

श्लाघ्यान्वयेति, नयनोत्सवकारिणीति,
निर्व्यूढसौहृदभरेति गुणोज्ज्वलेति।
एकैकमेव हि वशीकरणं गरीयो
युष्माकमेवमियमित्यथ किं ब्रवीमि ?॥ (१७)

---

(१६) परीति। तात! वत्स! पुत्रे पितरि पूज्ये च तातशब्दः प्रयुज्यते इति शब्दार्णवः। त्वद्विधानां बुद्धिविद्यादिसम्पन्नानामित्यर्थः प्रीतयः परिणतिरमणीयाः परिणामसुखदायिका इत्यर्थः। तैश्च तैश्च रमणीयप्रीतिप्रतिपादकैः इति यावत् हेतुभिर्लिङ्गैः अहमपि तव मान्या माननीया संवृत्तास्मीति भावः। तत् तस्मात् मत्तः परस्तात् मयि गतायां सत्यामित्यर्थः। परिचयकरुणायां परिचयमात्रेणैव दयापात्रामिह सुवदनायां मालत्यां सर्वथा मा व्यरंसीर्विरतो मा भव। सदैवानया सह विस्रम्भकथालापेन सुखेन कालं नयस्वेत्यर्थः।

(१७) श्लाघ्येति। श्लाघ्यान्वया उज्ज्वलकुलोद्भवेति नयनोत्सवकारिणी नेत्रानन्दजनिकेति, निर्व्यूढसौहृदभरा उपचितप्रेमनिकरेति गुणोज्ज्वला शीलादिमती इति इयं मालती भवति इत्यर्थः। एतादृशगुणानां मध्ये एकैकमेव हि

काम। वत्स माधव!

माध। आज्ञापय।

काम। वत्से मालति!

लव। आणवेदु भअवदी। (च)

काम। प्रेयो मित्रं, बन्धुता वा समग्रा,
सर्वे कामाः शेवधिर्जीवितञ्च।
स्त्रीणां भर्त्ता, धर्मदाराश्च पुंसाम्
इत्यन्योन्यं वत्सयोर्ज्ञातमस्तु॥ (१८)

मक। अथ किं।

लव। भअवदि! जधा तुम्हे आणवेध। (क)

काम। वत्स मकरन्द! त्वमनेनैव वैवाहिकेन मालती-नेपथ्येन प्रसाधितः, परिणायय आत्मानम्।

[ इति पेटामर्पयति। ]

---

(च) आज्ञापयतु भगवती।
(क) भगवति! यथा त्वम् आज्ञापयसि।

---

एकैकश एव गरीयो गुरुतरं वशीकरणं मन्त्रौषधादिना वश्यतानयनोपायः युष्माकम् इयमेव मालती प्रियतमा इति शेषः इति हेतोश्च किं ब्रवीमि अतः परं न मे बहु वक्तव्यमस्ति।

(१८) प्रेय इत्यादि। वत्सयोर्मालतीमाधवयोरन्योन्यमेतद्विदितमस्तु यत् स्त्रीणां भर्त्ता प्रेयः प्रियतमं वस्तु मित्रं सुहृद समग्रा बन्धुता बन्धुसमूहः सर्वे कामाः ईप्सिताः शेवधिर्निधिर्जीवितं च। पुरुषाणां धर्मदाराः पाणिगृहीताः प्रेय इत्यादि। बन्धुतेत्यत्र ग्रामजनबन्धुसहायेभ्यस्तलिति समूहे तल्। निधिर्ना शेवधिरित्यमरः। अनेन गान्धर्वविवाहो दर्शितः। स चानुरागमूलत्वाच्छ्रेष्ठः। यदाह। अनुरागात्मकत्वेन गान्धर्वः श्रेष्ठतां गतः। इति।

मक। यदाज्ञापयति भगवती, यावदितश्चित्रजवनिका-मन्तर्धाय नेपथ्यं धारयामि। [ तथा करोति। ]

माध। भगवति! सुलभवञ्चनर्थम् अतिसङ्कटम् इदं वयस्यस्य।

काम। आः कस्त्वमस्यां चिन्तायाम् ?।

माध। एवं भगवती एव जानाति।

[प्रविश्य मकरन्दः। विहसन्।] वयस्य! मालती अस्मि।

[ सर्वे सकौतुकं पश्यन्ति। ]

माध। [मकरन्दं परिष्वज्य, सोपहासम्। ] भगवति! कृतपुण्य एव नन्दनो, यः प्रियामीदृशीं मनसा मुहूर्त्तमपि कामयिष्यते।

काम। वत्सौ मालतीमाधवौ! इतो निर्गत्य, वृक्षगहनेन गम्यताम् उद्वाहमङ्गलार्थम् अस्मद्विहारिकायाः पश्चादुद्यानवाटः सुविहितं च तत्रैव वैवाहिकं द्रव्यजातम् अवलोकितया। भूयश्च

गाढोत्कण्ठकठोरकेरलवधूगण्डावपाण्डुच्छदैः
ताम्बूलीपटलैः पिनद्धफलिनव्यानम्रपूगद्रुमाः।

---

(१८) गाढेत्यादि। तद्भुवो भागा उद्यानवाटिकायाः प्रदेशा वां युवयोः प्रेयः शृङ्गारादिकं विधास्यन्ति शृङ्गारस्योपवनविहरणजन्यत्वात्। यदाह। उपवनगमनविहारैः शृङ्गाररसः समुद्भवति। भुवः प्रदेशाः कीदृशाः। ताम्बूली पर्णलता तासां पटलैः समूहैः पिनद्धा वेष्टिताः फलिनः फलयुक्ता अतएव व्यानम्राः आनताः पूगद्रुमाः क्रमुकवृक्षा येषु ते। कीदृशैः ताम्बूली पटलैः। गाढ़ा उत्कण्ठा यस्याः सा च कठोरा तृतीययौवनवयाः केरलदेशवधूस्तस्याः गण्डवत् कपोलवदवपाण्डुरीषद्धूसरम्छदः पत्रं येषां तैः। रतिसम्भोगे दक्षा प्रतिपक्षासूयिका गुणाढ्या च। अनिभृतगर्वितचेष्टा सा विज्ञेया तृतीया तु॥

कङ्कोलीफलजग्धिमुग्धविकिरव्याहारिणस्तद्भुवो
भागाः प्रेङ्खितमातुलुङ्गवृतयः, प्रेयो विधास्यन्ति वाम् ॥१८॥

गत्वा च तत्रैव मकरन्दमदयन्तिकागमनं यावत् स्थातव्यम्।

माध। [ सहर्षम्। ] कल्याणान्तरावतंसाहि कल्याणसंपदुपरिष्टात् भवति।

कल। दिट्ठिआ एदम्पि णो भविस्सदि। (ख)

माध। कथं सन्देह एवात्रभवतः।

लव। सुदं पिअसहीए। (ग)

काम। वत्स मकरन्द! वत्से लवङ्गिके! इत इतः प्रतिष्ठामहे।

माल। सहि! तुएवि गन्तव्वं ? (घ)

---

(ख) दिष्ट्या एवमपि नः भविष्यति।

(ग) श्रुतं प्रियसख्या।

(घ) सखि! त्वयापि गन्तव्यम्।

---

इति भरतः। अत एव उत्कण्ठाधिक्यम्। केरलदेशजत्वेन गौरत्वमुक्तम्। अतः पीतिसम्बन्धाच्छ्वेत ईषत्पाण्डुरत्वम्। यदाह। सितपीतसमायोगादीषत्पाण्डुरिति स्मृतः॥ पिनद्धेति वष्टि भागुरिरल्लोपमित्यल्लोपे रूपम्। फलिन इति फलबर्हाभ्यामिमनज्मत्वर्थीयः। तथा कङ्कोलीफलस्य जग्ध्या भक्षणेन मुग्धाः प्रीता ये विकिराः पक्षिविशेषास्तेषां व्याहार उक्तिर्येषु ते। कङ्कोली बदरी कोलीत्यनेकार्थः। भूमिं नखैर्विलिख्य ये चरन्ति ते विकिराः। नगौकोवाजिविकिरविविष्किरपतत्रय इत्यमरः। घदो जग्धिः। व्याहार उक्तिर्लपितमित्यमरः। तथा प्रेङ्खिता वातेन चलिता मातुलुङ्गवृतिर्वेष्टनं येषु ते। तथा चैवं विधरमणीयवनगमनेन सर्वमनोरथसिद्धिस्ते भविष्यतीति भावः। मातुलुङ्गश्छोलङ्गवचः। रुचकी मातुलुङ्क इत्यमरः।

लव। [विहस्य।] संपदं क्खु वग्रं एत्थ तुवरामो। (ङ)

इति निष्क्रान्ताः कामन्दकीलवङ्गिकामकरन्दाः।

माध। अयमहमिदानीं

आमूलकण्टकितकोमलबाहुनाल-
मार्द्राङ्गुलीदलमनङ्गनिदाघतप्तः।
अस्याः करेण करमाकलयामि कान्त-
मारक्तपङ्कजमिव द्विरदः सरस्याः॥ (२०)

इति निष्क्रान्ताः सर्वे। मालतीमाधवे मालतीचौरिकाविवाहो नाम षष्ठोऽङ्कः।

---

(ङ) साम्प्रतं खलु वयमत्र त्वरामहे।

---

(२०) आमूलेति। अनङ्ग एव निदाघः ग्रीष्मः तेन तप्तः द्विरदो हस्ती इव आमूलं मूलपर्य्यन्तं कण्टकितः सञ्जातकण्टकः रोमाञ्चितश्च कोमलबाहुरेव नालं दण्डं यस्य तं, आर्द्राः स्विन्ना अङ्गुलय एव दलानि यत्र तं अस्या मालत्याः कान्तं ललितं करं सरस्याः खातस्य आरक्तपङ्कजं द्विरद इव अहं करेण शुण्डेन च आकलयामि स्पृशामीति यावत्। अत्र सम्भवद्वस्तुसादृश्याक्षेपान्निदर्शना।

## सप्तमोऽङ्कः ।

—:०:—

ततः प्रविशति बुद्धरक्षिता । (१)

बुद्ध । अम्महे सुसिलिट्ठमालदीणेवत्थलच्छीविप्पलद्धणन्दणकिदकरग्गहो अमच्चभूरिवसुमन्दिरे भअवदीवअणसंविहाणेहिं खेमेण णोवाइदो मअरन्दो । अज्ज अह्मे वि णन्दणावासं उवगदा । तदो भअवदी णन्दणमापुच्छिअ गदा आवसहं । अअं च णववहूवरप्पवेसविरइदाकालकोमुदीमहूसवप्पउत्तिपज्जाउलासेसपरिअणो पदोसो अणुऊलइस्सदि अज्जणो व्ववसिदं । सम्पदं तुवरन्तकामो कामिणिं कामेदुं बहुसो सपादवन्दणं अब्भत्थिअ पुणो वि बलामोडिअ अहिहवन्तो मअरन्देण णिट्ठुरं पडिहदो जामादा । तदो सो क्खु अधिअबेलक्खखलन्तअक्खरो सरोसणिब्भरदुःक्खिदो मदप्पपप्फुरन्त-

---

(१) अधुना मालतीरूपधारिणा मकरन्देन कथं नन्दनविप्रलम्भो मदयन्तिकाहरणं च कृतं भवेदिति प्रबन्धाभिधानाय नियुक्तैव तत्र मयेत्यादिना प्रथमाङ्कसूचितबुद्धरक्षिताप्रवेशः ।

(२) अत्र माधवविवाहनिर्वाहाद्धर्षाश्चर्येऽम्महेशब्दः । सुश्लिष्टत्वं मकरन्दस्य गौरत्वादग्रशुक्लत्वादिना मालतीसाम्यात् । भगवतीति भगवत्यैवालङ्कृत्य प्रहित इत्यर्थः । चेमेण कुशलेन एतत्तु केनाप्यनुपलम्भात् गोपायितो गुप्तीकृतः । आपृच्छ्य संवादं कृत्वा । तत्र नन्दनगृहात् गच्छामीति तद्भवाननुमन्यतामिति संवादः । आपृच्छिः संवादार्थ इति शाब्दिकाः अत एवापृच्छस्व प्रियसखममुमिति मेघदूतादौ टीकाकृता तथैव विवृतमित्यवधेयम् । आवसथं गृहम् । कौमुदी आश्विनपूर्णिमाव्रतम् । यद्वा । कार्त्तिक्यां चन्द्रमण्डलपूजा कौमुदीव्रतम् ।

णअणो ण मे सम्पदं तुए कोमारबन्धईए पओअणं त्ति ससवहं पदृसं काउण वासभवणादो णिग्गदो त्ति। एदिणा पसङ्गेण मदअन्तिअं आणीअ मअरन्देण सह संजोजइस्सं॥ (क) (२)

इति निष्क्रान्ता। प्रवेशकः।

ततः प्रविशति अभ्यागतो मालतीवेशो मकरन्दो लवङ्गिका च। (३)

---

(क) अहो सुश्लिष्टमालतीनेपथ्यलक्ष्मीविप्रलब्धनन्दनकृतकरग्रहोऽमात्यभूरिवसुमन्दिरे भगवतीवचनसंविधानैः क्षेमेण गोपायितो मकरन्दः। अद्य वयमपि नन्दनावाससुपगताः। ततो भगवती नन्दनमापृच्छ्य गतावसथम्। अयं च नववधूगृहप्रवेशविरचिताकालकौमुदीमहोत्सवप्रवृत्तिपर्य्याकुलाशेषपरिजनः प्रदीपोऽनुकूलयिष्यति अद्य नो व्यवसितम्। साम्प्रतं त्वरमाणकामः कामिनीं कामयितुं बहुशः सपादवन्दनमभ्यर्थ्य पुनर्बलात्कारेणाभिद्रवन्मकरन्देन निष्ठुरं प्रतिहतो जामाता। ततः स खलु अधिकवैलक्ष्यस्खलदचरो सरोषनिर्भरदुःखितो मदप्रस्फुरन्नयनो न मे साम्प्रतं त्वया कौमारबन्धक्या प्रयोजनमिति सशपथं प्रतिज्ञां कृत्वा वासभवनान्निर्गत इति। एतेन प्रसङ्गेन मदयन्तिकामानीय मकरन्देन सह संयोजयिष्ये।

---

तदुभयं च ग्रीष्मे प्रवृत्तमित्यकालकौमुदीत्युक्तम्। यद्वा। जननयनानन्दकत्वेन कौमुदीव कौमुदीति रूपकम्। कौमुदी चन्द्रज्योत्स्ना यथाकालसम्भवा सन्ध्याकालीना वर्षर्तुभवा जनानन्दाय तथेयमपीत्यर्थः। अः केशवस्तस्य कालो वर्षाकालः सन्ध्याकालश्च। प्रदीपो रजनीमुखमित्यमरः। व्यवसितं मदयन्तिकाविवाहरूपम्। अन्यकार्य्यव्यापृते जने तत् अप्रत्यूहं निर्वहेदिति भावः। त्वरमाणेति विलम्बासहकामावेश इत्यर्थः। तिरस्कारात् अधिकेन वैलक्ष्येण लज्जया स्खलन्नचरो यस्य सः। रोषेण सह वर्त्तमानः निर्भरं अत्यर्थं दुःखितः। कौमारबन्धकी वेश्या माधवानुरक्तत्वात्। तदत्र नन्दनस्य विवाहदिन एव बलादभिद्रवणेन अधार्मिकत्वम्। कामशास्त्रानभिज्ञत्वं च दर्शितम्। यदाह। सुकुमाराः पुरुषाणामाराध्या योषितः सदा। अनिच्छया प्रवृत्तश्चेच्छृङ्गारं नाशयेद्रसम्॥ बन्धकीति परुषवाक्येन दुराचारत्वमप्यस्य। यदाह। ताडनं बन्धनं वा यो न विसृश्य समाचरेत्। ब्रूते परुषवाक्यं च दुराचारः स उच्यते॥ प्रसङ्गेन संविधानकेन।

(३) सुप्तस्य प्रवेशो भरतनिषिद्ध इति अभ्यागत इत्युक्तम्।

मक। लवङ्गिके! अपि नाम बुद्धरक्षितासंक्रान्ता भगवतीनीतिः विजेष्यते?। (४)

लव। को संदेहो एत्थ महाणुभाअस्स। किं वहुणा जहा एसो मञ्जीरसद्दो सुणीअदि तहा जाणामि तेण व्ववदेसेण आणीदा बुद्धरक्खिदाए मदअन्तिआ त्ति। ता उत्तरीआववारिदो पसुत्तलच्छणो चिट्ठ (ख)। (५)

मकरन्दस्तथा करोति।

ततः प्रविशति मदयन्तिका बुद्धरक्षिता च।

मद। सहि! सच्चं ज्जेव्व परिकोविदो मे भादा मालदीए? (ग)।

बुद्ध। अध इं? (घ)।

---

(ख) कः सन्देहोऽत्र महानुभावस्य। किं बहुना यथैष मञ्जीरशब्दः श्रूयते तथा जानामि तेन व्यपदेशेन आनीता बुद्धरक्षितया मदयन्तिकेति। तत् उत्तरीयापवारितः प्रसुप्तलक्षणस्तिष्ठ।

(ग) सखि! सत्यमेव परिकोपितो मे भ्राता मालत्या?।

(घ) अथ किम्?।

---

(४) भगवतीनीतेरव्यभिचारित्वेऽप्याश्रयभेदात्तदाशङ्कयाह। अपीति सम्भावनायाम्।

(५) अव्यभिचारित्वमेवाह। लवङ्गिकावाक्यं। कः सन्देहोऽत्र महानुभावस्य। मदयन्तिकापरिणयोऽवश्यं भावीति भावः। अत्र किं बहुना भणितेनेत्यर्थः। मञ्जीरो नूपुरम्। व्यपदेशेन मालतीप्रबोधच्छलेन। उत्तरीयेति उपरिवासःपिहिताङ्ग इत्यर्थः। इह नर्मगर्भो कैशिकीवृत्तिः। यदाह। कार्य्यकारणतो यत्र नायको गोपयेत्तनुम्। नर्मगर्भः स कथितो नाट्यवेदभिरुत्तमः।

मद। अहो। अच्चाहिदं ता एहि वामसीलं मालदिं णिब्भच्छेम्ह (ङ)। (६)

परिक्रामतः।

बुद्ध। इदं वासभवणदुवारं (च)। (७)

इति प्रविशतः।

मद। सहि लवङ्गिए! जाणीअदि पसुत्ता दे पिअसही णवेत्ति (छ)।

लव। एहि मा णं पडिबोधेहि जदो एसा चिरं दुम्मणाअन्ती दाणिं ज्जेव्व ईस मणुं उज्झिअ पसुत्तेति। तदो सणिअं इध ज्जेव्व सअणुप्पन्ते उवविस (ज)। (८)

---

(ङ) अहो! अत्याहितं तदेहि वामशीलां मालतीं निर्भर्त्सयावः।

(च) इदं वासभवनद्वारम्।

(छ) सखि लवङ्गिके! ज्ञायते प्रसुप्ता ते प्रियसखी नवेति।

(ज) एहि मैनां प्रतिबोधय यत एषा चिरं दुर्मनायमाना इदानीमेवेषन्मन्युमुज्झित्वा प्रसुप्तेति। ततः शनैरिहैव शयनीयोपान्ते उपविश।

---

(६) अत्रात्याहितमतिक्रमः। निर्भर्त्सयाम इति। विरागं नायकं ज्ञात्वा वाचा हीनं तु कन्यका। पश्यन्ती लम्भवच्छन्नं निर्विद्येत ततः परम्॥ इति भरतानुरोधेन कन्याविस्रम्भपरे मे भ्रातरि व्यर्थमियं रुष्टेति निर्भर्त्सनमस्या इति भावः।

(७) बुद्धरक्षितावाक्यं। एतद्वासभवनद्वारम्। तत्प्रविशेति शेषः।

(८) अत्र कथमस्माद्दुराचारात् त्रास्यामीति चिन्तया दौर्मनस्यान्निद्रा। यदाह। आलस्यदौर्मनस्यक्लमश्रमचिन्तनस्वभावेभ्यः। रात्रौ जागरणादपि निद्रा समुत्थे दिवापि सम्भवति॥ तथा च दुःखहानाय निद्रयापि क्षणं नयत्वियमित्याशयः।

मद। [तथा कृत्वा।] सहि! दुम्मणाअदि इअं वामसीला (झ)।

लव। कहं णाम णववहूविस्सम्भणोबाअजाणुअं लडहं विअड्ढमहुरभासिणं ससिणेहं अरोसणं अ दे भादरं भत्तारं समासादिअ सही ण दुम्मणाइस्सदि (ञ)। (९)

मद। बुद्धरक्खिदे! पेक्ख विप्पदीअं अह्मे वि उबालम्भीआमो (ट)।

बुद्ध। विप्पदीअं ण विप्पदीअं वा। (ठ) (१०)

मद। कधं विअ। (ड)

बुद्ध। जं दाव चलणपडिदो वि भत्ता ण वहुमाणिदो

---

(झ) सखि! दुर्मनायत इयं वामशीला।

(ञ) कथं नाम नववधूविस्रम्भणोपायज्ञातारं मनोहरं विदग्धमधुरभाषिणं सस्नेहमरोषणं च ते भ्रातरं भर्त्तारं समासाद्य सखी न दुर्मनायिष्यते।

(ट) बुद्धरक्षिते! प्रेक्षस्व विप्रतीपं वयमपि उपालभ्यामहे।

(ठ) विप्रतीपं न विप्रतीपं वा।

(ड) कथमिव।

---

(९) अत्र विस्रम्भणं विश्वासमुत्पाद्य वशीकरणम्। लडहं मनोहरम्। विदग्धं कलाभिज्ञम् नववधूविस्रम्भणोपायस्ताम्बूलादिदानम्। यदाह। बाला ताम्बूलमालाफलरससुरसाहारसंमानहार्य्येत्यादिकः सुप्रसिद्ध एव। प्रकृते तूपालम्भपरत्वाद्विपरीतार्थकत्वमिति भावः।

(१०) विप्रतीपं विपरीतम्। पादपतितनन्दनाननुवर्त्तनान्मालत्यैवोपालभ्या तदकरणाद्विपरीतत्वमिति भावः। पादपतनेऽनुवर्त्ती भरतः। व्रीडायुक्तापि या योषिदतिदुष्टापि या भवेत्। पादे पतन्तं पुरुषमनुवर्त्तेत सर्वदा। बुद्धरक्षितावाक्यं। विप्रतीपं न वा विप्रतीपम्। तच्चित्तानुवर्त्तनेन स्वीकृतयुक्त्या निराकरणेन वैपरीत्यमिति भावः।

अत्थ लज्जादोसेण एसो जणो उआलम्भणिज्जो । जं वि पिअसहि ! णववहूविरुद्धसाहसोवक्कमक्खलणवेलक्खविच्छड्डिदमहाणुभावत्तणस्स भादुणो दे वाआगदं किं वि अपरिट्ठाणं तेण तुह्मे त्ति ।

किं च । कुसुमसधर्माणो हि योषितः सुकुमारोपक्रमाः ।
तास्त्वनधिगतविश्वासैः प्रसभमुपक्रम्यमाणाः सद्यः संप्रयोगविद्वेषिण्यो भवन्ति ।

एवं किल कामसुत्तआरा आमणन्ति (ढ) । (११)

---

(ढ) यत्तावच्चरणपतितोऽपि भर्त्ता न बहुमानितोऽत्र लज्जादोषेणैष जन उपालम्भनीयः । यदपि प्रियसखि ! नववधूविरुद्धसाहसोपक्रमस्खलनवैलक्ष्यविच्छर्दितमहानुभावत्वस्य भ्रातुस्ते वाचागतं किमप्यपरिस्थानं तेन यूयमिति । एवं किल कामसूत्रकारा आमनन्ति ।

---

(११) स्वाभिप्रायं गोपायितुं साधारणोक्त्या लवङ्गी वदति । अत्र इयमिति वक्तव्ये जन इत्यभिधानं मालतीमकरन्दसाधारण्यार्थम् । नववध्वा लज्जयातिक्रमे न दोषः । यदाह । नवपरिणीता योषिद् यत्नादपनीय साध्वसं सद्यः । विविधविनोदकथाभिर्विश्वासं नीयते सरसैः ॥ रभसोपक्रमः सहसा प्रवृत्तिः स च विरुद्धः । यदाह । सहसा वाप्युपक्रान्ता कन्याचित्तमविन्दता । साध्वसं त्रासमुद्वेगं सद्यो द्वेषं च विन्दति ॥ सा प्रीतियोगमप्राप्य तेनोद्वेगेन दुःखिता । पुरुषद्वेषिणी वा स्याद्विद्विष्टा वा ततोऽन्यगा ॥ स्खलनमुपक्रान्तानिर्वाहः । विच्छर्दितं विशीर्णम् । अपरिस्थानकमपरिस्थितिः । अधैर्यमिति यावत् । यूयमुपालभ्या इति मदयन्तिकां प्रति वचनम् । आत्मपक्षप्रवेशात् । अह्मे त्ति पाठे बुद्धरक्षिता मदयन्तिकया सह स्वाभेदं मन्यमाना वयमित्याह । शिल्पकारित्वात् संस्कृताश्रयणम् । यदाह । दिव्याया गणिकायाश्च शिल्पकार्यास्तथैव च । विदग्धायाः स्त्रिया भाषां संस्कृतेनापि योजयेत् ॥ यद्वा । कामसूत्रानुकरणात् संस्कृतभाषा । सधर्माणस्तुल्याः । उपक्रम आरम्भः । प्रसभं हठात् । संप्रयोगः सुरतम् । किल प्रसिद्धौ । कामसूत्रकारा आमनन्ति सन्दधते ।

लव। [साखम्।] घरे घरे पुरिसा कसकाओ समुव्व-हन्ति ण क्खु को वि लज्जापराधीणं अणवरद्धं मुद्धलडहस-हावं कुलकुमारीअणं पहवामि त्ति वाआणलेण पज्जालेदि। एदे क्खु दे हिअअसल्लणिक्खेवा आमरणं सुमरिज्जन्तदूसहा पदिघरणिवासवेरग्गकारिणो महापरिभवा जाणं किदे इत्थि-आणं जम्मलाहं जुगुच्छन्ति बान्धवा (ण)। (१२)

मद। वुद्धरक्खिदे! अदिदुम्मिदा पिअसही लवङ्गिआ। महन्तो को वि मे भादुणा बाआवराधो से किदो (त)। (१३)

बुद्ध। अध इं। सुदं अह्मेहिं जधा मम ण तुए संपदं कोमारबन्धईए पओअणं त्ति (थ)।

मद। [कर्णौ पिधाय।] अहो! अदिक्कमो! अहो! पमादो। सहि लवङ्गिए! असमत्थह्मि दे सुहं पि संपदं

---

(ण) गृहे गृहे पुरुषाः कुलकन्यकाः समुद्वहन्ति न खलु कोऽपि लज्जापरा-धीनमनपराद्धं मुग्धसुकुमारस्वभावं कुलकुमारीजनं प्रभवामीति वाचानलेन प्रज्वा-लयति। एते खलु ते हृदयशल्यनिक्षेपा आमरणं संस्मर्य्यमाणदुःसहाः पतिगृह-निवासवैराग्यकारिणो महापरिभवा येषां कृते स्त्रीणां जन्मलाभं जुगुप्सन्ते बान्धवाः।

(त) बुद्धरक्षिते! अतिदुर्मनायमाना प्रियसखी लवङ्गिका। महान् कोऽपि मे भ्रात्रा वागपराधोऽस्याः कृतः।

(थ) अथ किम्। श्रुतमस्माभिर्यथा मम न त्वया साम्प्रतं कौमारबन्धक्या प्रयोजनमिति।

---

(१२) अत्र निक्षेप आरोपणम्। जुगुप्सन्ते निन्दन्ति। दुःशीला कन्या मा जायतामिति भावः।

(१३) कथमन्यथास्युद्विग्नेयमिति भावः।

दंसिदुं तधावि पहवामि त्ति किं पि मन्तइस्सं (द)। (१४)

लव। साधीणो दे अअं जणो (ध)। (१५)

मद। चिट्ठदु ज्जेव्व मह भादुणो दुस्सीलदा अवरिट्ठाणं अ। तुम्हेहिं ईदिसो वि सम्पदं जधा चित्तमणुवत्तणीओ जेण भत्ता एसो त्ति। अस्सं च। तुम्हे इमस्स अणहिजादक्खराहिक्खेवोवालम्भदूसणस्स जं मूलं तं ण जाणध (न)। (१६)

लव। कधं वाआमन्तिदं वि णाम ण जाणीमो (प)

मद। जं दाणिं तस्सिं महाणुभावे माहवे किं पि किल मालदीए तारामित्तअं आसी तहिं सव्वलोअस्स अदिभूमिं गदो पवादो। तं क्खु एदं विअम्भादि। ता पिअसहि! जधा इस भत्तुणो अवक्खाहिणिवेसो णिरवसेसं हिअआदो उव्वरीअदि तधा करेध। अण्णधा महादोसो त्ति जाणिदं

---

(द) अहो! अतिक्रमो। अहो! प्रमादः। सखि लवङ्गिके! असमर्थास्मि ते मुखमपि साम्प्रतं दर्शयितुं तथापि प्रभवामीति किमपि मन्त्रयिष्ये।

(ध) स्वाधीनस्तेऽयं जनः।

(न) तिष्ठत्येव मम भ्रातुर्दुःशीलतापरिस्थानं च। युष्माभिरीदृशोऽपि साम्प्रतं यथाचित्तमनुवर्त्तनीयो येन भर्त्तैष इति। अन्यच्च। यूयमस्य अनभिजाताक्षराधिक्षेपोपालम्भदूषणस्य यन्मूलं तन्न जानीथ।

(प) कथं वाचामन्त्रितमपि नाम न जानीमः।

---

(१४) अत्र प्रभवामीति वरभगिन्यपि त्वयि प्रणयवशादायासवती अहमिति भावः।

(१५) अत्र यथेच्छसि तथा ब्रूहीत्यर्थः।

(१६) अविदृशोऽपि दुःशीलोऽपि। यथाचित्तं चित्तानतिक्रमेण। भर्त्तेति। कोऽपि दैवः कुलस्त्रीणां पतिरेव पतन्नपि॥ इतिवचनात् स्त्रीषु भर्त्ता प्रभवतीति भावः। न चेति न च न जानीथ। किन्तु जानीथ एवेत्यर्थः।

भोदु। णिक्कम्पदारुणा कस्सकाओ दूम्मावेन्ति हिअअं मणुस्साणं ईदिसादो दुरभिसङ्गादो त्ति मा णं भणिस्सध मदअन्तिआए कधिदं त्ति (फ)। (१७)

लव। अइ असावधाणे! असंबद्धलोअप्पवादमोहिदे अवेहि ण तुए सह जप्पिस्सं (ब)। (१८)

मद। सहि! पसीद पसीद। अहवा ण तुह्मे अफुडं भणिदाओ चिट्ठध। किं च। अह्मे सच्चं ज्जेव्व माहवेक्कमअजीअलोअं मालदिं जाणीमो। केण वा कठोरकेदअगब्भविब्भमावअवदोव्वल्लणिव्वहिदसुंदरत्तणविसेसं माहवसहत्यणिम्मावदिवउलावलीविरइदकण्ठावलम्बमेत्तसंधारिदजीवणं मालदीए माहवस्स अ पभातचन्दमण्डलापाण्डुरपरिक्खामर-

---

(फ) यदिदानीं तस्मिन्महानुभावे माधवे किमपि किल मालत्याः तारामैत्रकमानीत् तत्र सर्वलोकस्यातिभूमिं गतः प्रवादः। तत् खल्विदं विजृम्भते। तत् प्रियसखि! यथैष भर्त्तुरपक्षाभिनिवेशो निरवशेषं हृदयादुद्ध्रियते तथा कुरुत। अन्यथा महादोष इति ज्ञातं भवतु। निष्कम्पदारुणाः कन्यका दुन्वन्ति हृदयं मनुष्याणामीदृशाद् दुरभिसङ्गादिति। मैनां भणिष्यथ मदयन्तिकया कथितमिति।

(ब) अयि असावधाने! असम्बद्धलोकप्रवादमोहिते! अपेहि न त्वया सह जल्पिष्यामि।

---

(१७) अत्र किल प्रसिद्धौ। तारामैत्रकं प्रेम। तत्र माधवे। अतिभूमिमतिदूरम्। तत् खल्विति। माधवानुरक्ता मालती इति अस्य अनुशय इत्याशयः। विजृम्भते प्रकाशते। अपक्षे मालती माधवपरा इति असत्पक्षे अभिनिवेशो दोषः। निरवशेषमिति क्रियाविशेषणम्। दोष इत्यस्या दौर्भाग्यं त्यागो वा नित्यशङ्काकुलतया स्यादिति भावः। निष्कम्पेति। सततपरपुरुषालोकनेन लज्जाहीनतया दारुणत्वमत एवेयं कुलटा न वेति परेषां सन्देह इति भावः।

(१८) अत्र अपेहि दूरं गच्छ।

मणीअदंसणं ण विभाविदं सरीरं। किं च तद्दिअसे कुसुमाअरुज्जाणपेरन्तरच्छासुहसमागमे सविब्भमुल्लसिदकोदूहलुप्फुल्लपसरन्तणअणुप्पलवहलविलासमसिणसञ्चारचारुतारआविराअन्तविब्भमा अणङ्गणट्टाआरिअसव्वाआरोबदेसणिम्माविअविअड्ढमुद्धमहुरा तुए वि ण णिरूविदा इमाणं दिट्ठिसब्भेदा। किं अ। मम भादुणो दाणवुत्तन्तं सुणिअ तक्खणुच्छलिदगम्भीरावेअव्वइअरमिलाअन्तदेहसोहाणं उव्वत्तमाणमूलं विअ ण लक्खिदं हिअअं। किं अ। एदं पि अवरं सुमरिदं मए (भ)। (१९)

---

(भ) सखि! प्रसीद प्रसीद। अथवा न यूयमस्फुटभणितैस्तिष्ठथ। किञ्च। वयं सत्यमेव माधवैकमयजीवलोकां मालतीं जानीमः। केन वा कठोरकेतकगर्भविभ्रमावयवदौर्बल्यनिर्वाहितसुन्दरत्वविशेषं माधवस्वहस्तनिर्मितबकुलावलीविरचितकण्ठावलम्बसावसन्धारितजीवनं मालत्या माधवस्य च प्रभातचन्द्रमण्डलापाण्डुरपरिक्षामरमणीयदर्शनं न विभावितं शरीरम्। किञ्च। तद्दिवसे कुसुमाकरोद्यानपर्यन्तरथ्यासुखसमागमे सविभ्रमोल्लसितकौतूहलोत्फुल्लप्रसरन्नयनोत्पलबहलविलासमसृणसञ्चारचारुतारकाविराजमानविभ्रमा अनङ्गनाट्याचार्यसर्वाकारोपदेशनिर्मितवैदग्धमुग्धमधुरस्त्वयापि न निरूपिता अनयोर्दृष्टिसम्भेदाः। किं च। मम भ्रातुर्दानवृत्तान्तं श्रुत्वा तत्क्षणोच्छलितगभीरावेगव्यतिकरम्लायमानदेहशोभयोरुद्वर्तमानमूलमिव न लक्षितं हृदयम्। किं च। एतदप्यपरं स्मृतं मया।

---

(१९) अत्र न यूयमिति त्वदस्फुटवादे मेऽवसाद इत्यर्थः। न खलु न जानीमः। अपि तु जानीम एव। तथा च त्वमपह्नवं किं करोषीत्यर्थः। कठोरः परिणतो जातपाण्डिमेत्यर्थः। यद्वा। अकठोरा बाला केतकीत्यर्थः। तादृशी सातिपाण्डुरेव भवति। न विभावितं न ज्ञातम्। अपि तु सर्वैरेव ज्ञातमित्यर्थः। तत् किमपह्नवं करोषीति भावः। विभ्रमो विलासः। स च स्त्रियां यथा। यानस्थानासनादीनां नेत्रवक्त्रादिकर्मणाम्। उत्पद्यते विशेषो

लव। किं दाणिं अवरं (स)। (२०)

मद। जं मम तस्स जीविदप्पदाइणो महाणुभावस्स चेअणापडिलम्भपिअणिवेदिआए मालदीए भअवदीविअड्ढवअणोवस्सासबोधिदेण हिअअं जीविदं अ माहवेण पारितोसिअत्तणेण सअंगाहसाहसे णिउत्तं। अह अ लवङ्गिए तहिं तुए ज्जेव्व भणिदं पडिच्छिदो क्खु णो पिअसहीए अअं पसादो त्ति (य)। (२१)

लव। कदमो उण महाभाओ त्ति विसुमरिदं मए (र)।

मद। सहि सुमर सुमर जेण तस्सिं दिअसे विअडदुट्ठसावदावदेसकालगोचरं गदा असरणा तक्कालसंणिहिदेण जीवि-

---

(स) किमिदानीमपरम्।

(य) यत् खलु मम तस्य जीवितप्रदायिनो महानुभावस्य चेतनाप्रतिलम्भप्रियनिवेदिकाया मालत्या भगवतीविदग्धवचनोपन्याससबोधितेन हृदयं जीवितं च माधवेन पारितोषिकत्वेन स्वयंग्राहसाहसे नियुक्तम्। अथ च लवङ्गिके तव त्वयैव भणितं प्रतीष्टः खलु नः प्रियसख्या अयं प्रसाद इति।

(र) कतमः पुनर्महाभाग इति विस्मृतं मया।

---

यः स विलास इति स्मृतः॥ पुरुषे यथा। मन्दसञ्चारिणी दृष्टिर्गतिश्च वृषभायिता। स्मृतिपूर्वस्तथालापो विलासः कथ्यते यथा॥ किं न त्वया निरूपिता येनापकृष इत्यर्थः। आवेगोऽप्राप्तिदुःखम्। अङ्गारितं सुतप्तम्। उद्वर्त्तमानमुत्पतत्। आवेगोऽयमिष्टानाप्तिजः। यदाह। आवेगश्च भवेत् पुंसामिष्टानावाप्तिसम्भवात्।

(२०) किमिदानीमपरम्। त्वया स्मृतमिति शेषः।

(२१) अत्र चेतनाप्राप्तिरूपमेव प्रियम्। पारितोषिकं यद्गालव्रणितेत्यादिश्लोके दर्शितम्। नियुक्तं दत्तम्। तच्चित्तानुरागं विना नोपपन्नमिति भावः। अर्थान्तरोक्तिप्रसङ्गेन प्रकृतापङ्गवार्थमाह। आं सखि इति आमिति पूर्वस्म रणार्थः। विस्मृतमिति। ज्ञातापि तत्कथनायायं प्रश्न इति भावः।

दप्पदाइणा पीअरभुअत्थम्भेण णिक्कारणबन्धवेण सअलभुवणेक्कसारणिअदेहोवहारसाहसं कदुअ परिरक्खिदह्मि। जेण अ दिढदाढाविदारिअविअडमंसलुत्ताणपरिणाहिवक्खत्थलेण जरठजज्जरिदजवापीडहारिणा करुणेक्कमणेण मम किदे बिसहिदा अतिदुट्ठसद्दूलणहसिहावज्जप्पहारा मारिदो अ सो दुट्ठसावदमहारक्खसो त्ति (ल)। (२२)

लव। हुं मअरन्दो (व)

मद। [ सानन्दम्। ] पिअसहि! किं किं भणासि (श)

लव। णं भणामि मअरन्दो त्ति (ष)।

सस्पृह शरीरमस्याः स्पृशन्ती संस्कृतमाश्रित्य।

---

(ल) सखि! स्मर स्मर येन तस्मिन् दिवसे विकटदुष्टश्वापदापदेशकालगोचरं गता अशरणा तत्कालसन्निहितेन जीवितप्रदायिना पीवरभुजस्तम्भेन निष्कारणबान्धवेन सकलभुवनैकसारनिजदेहोपहारसाहसं कृत्वा परिरक्षितास्मि। येन च दृढदंष्ट्राविदारितविकटमांसलोत्तानपरिणाहिवक्षःस्थलेन जरठजर्जरितजवापीडहारिणा करुणैकमनसा मम कृते विसोढा अतिदुष्टशार्दूलनखशिखावज्रप्रहारा मारितश्च स दुष्टश्वापदमहाराक्षस इति।

(व) हुं मकरन्दः।

(श) प्रियसखि! किं किं भणसि।

(ष) ननु भणामि मकरन्द इति।

---

(२२) अव स्मर इति मकरन्दमिति भावः। श्वापद इति व्याघ्रव्याजेन यम इत्यर्थः। विकटं विशालम्। मांसलं स्थूलम्। उत्तानमुच्छ्रितम्। जरठं कठिनं जर्जरितं विध्वंसितं यदोड्रपुष्पमुकुटं तदिव हरति। कर्त्तर्य्युपमान इति णिनिः। हरणमिह समीकरणम्! रक्ताक्तदेहतया साम्यम्। नखशिखा नखाग्रम्।

वयं तथा नाम यदात्थ किं वदा-
म्ययं त्वकस्माद्विकलः कथान्तरे ।
कदम्बगोलाकृतिमाश्रितः कथं
विशुद्धमुग्धः कुलकन्यकाजनः ? ॥ (२३)

मद [सलज्जम् । ] सहि कीस मं उवहससि । णं भणामि णिव्वावअन्ति मं तारिसस्स अप्पाणिरवेक्खव्ववसाइणो किदन्त-कवलिज्जन्तजीविद--बलामोडिअपच्चाणअण-गुरुओपकारिणो जणस्स सङ्कधासु णामग्गहणसुमरणाइं । तधा अ सो तुए वि गाढप्पहारवेअणारम्भ-विह्मारिदसरीरसङ्गलिदसेअसलिलुप्पीलो मोहमउलाअन्तणेत्तकन्दोट्टजुअलो भूमिविलग्गितासिलदा-

(स) सखि ! किं मामुपहससि । ननु भणामि निर्वापवन्ति मां तादृशस्य आत्मनिरपेक्षव्यवसायिनः कृतान्तकवल्यमानजीवितबलात्कारप्रत्यानयनगुरूकोप-कारिणो जनस्य सङ्कथासु नामग्रहणस्मरणानि । तथा च स त्वयापि गाढ़प्रहार-

(२३) वयमिति । यत् त्वं आत्थ ब्रवीषि वयं तथा नाम माधवे अनुरक्ता इति सत्यम् तु किन्तु अहमपि तवापि विषये गोपनीयं किं वदामि ? कथयामि ? । विशुद्धमुग्धः विशुद्धः निष्कलङ्कः मुग्धः प्रेमानभिज्ञश्च अयं कुलकन्यकाजनः महत्कुलोद्भवः त्वमिति भावः कथान्तरे कथामध्ये अकस्मात् कथं किमर्थं विकलः विह्वलः सन् कदम्बस्येव गोलाकृतिं आश्रितः रोमाञ्चेन पुलकितोजातः । सत्यम् अस्माकं सखी माधवप्रेमनिमग्ना किन्तु त्वमपि मकरन्दनामश्रवणमात्रेण सञ्जात-पुलका अतः तवापि मकरन्दानुरागित्वमनुमीयते इति भावः ।

(२४) अत्र उपहससीति नाहं मकरन्दानुरक्ततया दृष्टा किं तु तद्वी-रत्वमभिनन्दामीति न हासस्थानमिति भावः । नन्विति । एवं स्वहर्ष-स्यान्यथासिद्धिमुक्त्वा निजाङ्गसङ्गजं खेदादिकं मकरन्देऽन्यथयति तथा चेति । विह्मारितशरीरेति मूर्च्छाकथनम् । सङ्कलितो निःसृतः । उत्पीडः पूरः ।

विट्ठम्भधीरधारिदसरीरभारो पच्चक्खीकिदो ज्जेव्व मदअन्तिआणिमित्तमेत्तविच्छड्डिअमहामहग्घजीवलोओ महाभाओ त्ति (स)। (२४)

मदयन्तिका। खेदादीन् विकारान् नाटयति।

बुद्ध। व्ववसिदं पिअसहीए सरीरेण (ह)। (२५)

मद। [सलज्जम्।] पिअसहि अवेहि। उव्भिसह्मि सहवासिणीए वीसम्भेण (च)।

लव। सहि मदअन्तिए! अह्मे वि जाणिदव्वं जाणीमो। ता पसीद विरम व्ववदेसादो। एहि वीसम्भगव्भकधावन्धसरिसं सुहं चिट्ठह्म (क)। (२६)

---

वेदनारम्भविस्फारितशरीरसंगलितस्वेदसलिलोत्पीडो मोहमुकुलायमाननेत्रकन्दोट्टयुगलो भूमिविलग्नासिलताविष्टम्भधैर्यधारितशरीरभारः प्रत्यक्षीकृत एव मदयन्तिकानिमित्तमात्रविच्छर्दितमहामहार्घजीवलोको महाभाग इति।

(ह) व्यवसितं प्रियसख्याः शरीरेण।

(च) प्रियसखि! अपेहि। उद्भिन्नास्मि सहवासिन्या विसम्भेण।

(क) सखि मदयन्तिके! वयमपि ज्ञातव्यं जानीमः। तत्प्रसीद विरम व्यपदेशात्। एहि विसम्भगर्भकथाबन्धसदृशं सुखं तिष्ठामः।

---

कन्दोट्टो नीलोत्पलम्। मोहेति मोहेन नेत्रमीलनं न तु मदङ्गसङ्गादिति भावः। यदाह। व्यसनाभिघातभयपूर्ववैरस्मरणजो भवति मोह इति। प्रहारमूर्च्छने कथमयं भूमौ न पतितोऽत आह भूमीति। विष्टम्भः संबन्धः। विच्छर्दितः परित्यक्तः। महामहार्घमतिदुर्लभम्। जीवलोको मर्त्यभुवनम्। प्रियालिङ्गनस्मरणादिना खेदादिकम्। खेदादीनित्यनेन किलकिञ्चितभावाविष्करणम्। यदाह। यदन्तर्निहितस्वाङ्गैः सव्यापारैर्मनोभुवः। सव्रीडाविष्कृतिः स्त्रीणां तदाहुः किलकिञ्चितम्॥

(२५) अत्र खेदादिमता तव शरीरेण मकरन्दसम्भोगोऽभिलषित इत्यर्थः।

(२६) अत्र सहवासिन्याः सख्याः। नाहं कामजखेदादिनोद्भिन्ना किं तु

बुद्ध। सोहणं लवङ्गिआ भणादि (ख)। २७

मद। विधेअह्मि सम्पदं पिअसहीओ! (ग)।

लव। जइ एव्वं ता कधेहि कधं णु दे कालो गच्छदि त्ति (घ)। (२८)

मद। णिसामेहि पिअसहि! मम बुद्धरक्खिदापक्खवादपच्चएण पढमं ज्जेव्व तस्सिं जणे अदिभूमिं गदो अणुराओ। अवि अ। तस्सिं जणे भरिदुव्वरन्तकोदूहलुक्कण्ठामणोरहं हिअअं आसी। तदो बिहिणिओअणिव्वुत्तदंसणा भविअ दुव्वारदारुणाणङ्गदुक्खसन्दाबिदकड्ढन्तचित्तविहडन्तजीबिदा सम्भाबिअह्मि। बिजिम्भिदापुव्वसव्वङ्गप्पज्जलिअ-

---

(ख) शोभनं लवङ्गिका भणति।

(ग) विधेयास्मि साम्प्रतं प्रियसख्यौ!।

(घ) यद्येवं तत् कथय कथं नु ते कालो गच्छतीति।

(ङ) निशामय प्रियसखि! मम बुद्धरक्षितापक्षपातप्रत्ययेन प्रथममेव तस्मिन् जनेऽतिभूमिं गतोऽनुरागः। अपि च तस्मिन् जने भृतोद्वृत्तकौतूहलोत्क-

---

त्वद्विसम्भकथयेति भावः। अभिज्ञास्मीति पाठेऽभिज्ञातास्मीत्यर्थः। अत्र जानीम एवेति कामन्दक्यादिद्वारा तव मकरन्दस्य च चेष्टितं ज्ञातमेव। तत् कथमपह्नव इति भावः। व्यपदेशात् छलात्। सदृशमिति मकरन्दे स्नेहानुबन्धनमपि कथयेत्याशयः। उभयमपि क्रियाविशेषणम्।

(२७) अत्र शोभनं कथयितुमर्हसीत्यर्थः।

(२८) अत्र मकरन्दवियोगेन कथं वर्त्तसे इति भावः।

(२९) अत्र निशामय शृणु। एकवचनमिह लवङ्गिकापेक्षया। बुद्धरक्षिताया विदितवृत्तान्तत्वात्। कथाकथनं तु रामहृदये यदाह। यात्रा प्रस्कन्दनमुत्सवो वा स्वप्नोऽथ चित्रं रतिसङ्कथा च। भवन्त्युपायाः प्रथमावलोके

सअणहुदवहुद्दामदूसहाआसदुम्मणाअन्तपरिअणा पच्चासाबिमोक्खमेत्तसुलहमिच्चुणिव्वाणपडिऊलबुद्धरक्खिदावअणवड्ढिदावेअव्वइअरबिसंठुला इमं जीअलोअपरिवत्तं अणुभवामि (ङ)। (२९)।

सङ्कप्पसिविणअन्तरेसु अ मणोरहुम्मादमोहिदा पेक्खामि तं जणं। सो वि पिअसहि मुहुत्तणिव्वूढविम्हअबिसंठुलुव्वेल्लबित्थरन्तललिदणेत्तपुण्डरीअतण्डवुप्पीलडम्बरपडिरूढमेरेअमदघुम्मिअं विअ चिरं णिज्झाअदि मं (च)। (३०)

---

त्कामनोरथं हृदयमासीत्। ततो विधिनियोगनिर्वर्त्तदर्शना भूत्वा दुर्वारदारुणानङ्गदुःखसन्तापितक्वथच्चित्तविघटमानजीविता सम्भावितास्मि। विजृम्भितापूर्वसर्वाङ्गप्रज्वलितमदनहुतवहोद्दामदुःसहायासदुर्मनायमानपरिजना प्रत्याशाविमोचनात्सुलभमृत्युनिर्वाणप्रतिकूलवुद्धरचितावचनवर्द्धितावेगव्यतिकरविसंष्ठुला इमं जीवलोकपरिवर्त्तमनुभवामि।

(च) सङ्कल्पस्वप्नान्तरेषु च मनोरथोन्मादमोहिता प्रेक्षे तं जनम्। सोऽपि प्रियसखि! मुहूर्त्तनिर्व्यूढविस्मयविसंष्ठुलोद्वेल्लद्विस्तार्यमाणललितनेत्रपुण्डरीकताण्डवोत्पीडडम्बरप्रतिरूढमैरेयमदघूर्णितमिव चिरं निर्ध्यायति माम्।

---

यूनोर्यतो वृद्धिमुपैति रागः॥ पक्षपात इति बुद्धरचितापक्षपातो गुणबाहुल्यं विना न भवतीति विश्वास इति भावः। अतोद्भूतमतिरिक्तोभवत्। कौतूहलमुत्कण्ठा च मनोरथश्चेति विग्रहः। ततो बहुव्रीहिः। यद्वा। अतिरिक्तोभवत् कौतूहलमुत्कण्ठा च यत्र मनोरथे तादृशो मनोरथो यत्र तत्तथा। सर्वाङ्गदाहो व्याध्यवस्थायाम्। यदाह। मनःसंमोहसर्वाङ्गदाहहृच्चादिभिस्तथा। शिरसो वेदनाभिश्च व्याधेरभिनया यथा॥ मरणमेव निर्वाणं मोक्षः। सर्वदुःखापहारकत्वात्। मद्वचनादिष्टसङ्गस्तव स्यादिति बुद्धरचितावचनम्। विसंष्ठुला संशयितचित्ता। जीवलोकस्य परिवर्त्तोऽन्यथात्वं मूर्च्छेत्यर्थः। यद्वा। मूर्च्छानन्तरं पुनर्जीवलोकप्रवेशोऽत्र परिवर्त्तनम्।

(३०) सङ्कल्पान्तरे भावनाबलजज्ञानमध्ये स्वप्नज्ञानमध्ये चेत्यर्थः। निर्व्यूढः

किं अ। कवलिदारबिन्दकेसरकसाअकण्ठकलहंसघोसघग्घरक्खलिदगम्भीरतारधीरणादभरिदकण्णबिवरं पिए मदअन्तिए! एहि त्ति व्वाहरदि। अध अ। पप्फुरन्तपओहरुव्छलदुत्तरीअअञ्चलावलम्बणपरिभवेण ससंभमुत्तरंगिधमधमाअन्तहिअअं मं समुत्तासेदि (छ)। (३१)

सहसा बिसज्जिअंसुअप्पसरिदं तक्खणकठोरकमलदण्डाअमाणबाहुबन्धणाववारिअपओहरुग्गमं बिहडन्तबिअडमेह-

---

(छ) किं च। कवलितारविन्दकेसरकषायकण्ठकलहंसघोषघर्घरस्खलितगम्भीरतारधीरनादभरितकर्णविवरं प्रिये मदयन्तिके! एहि इति व्याहरति। अथ च। प्रस्फुरत्पयोधरोच्छलदुत्तरीयाञ्चलावलम्बनपरिभवेण ससंभ्रमोत्तरङ्गिधमधमायमानहृदयां मां समुत्त्रासयति।

(ज) सहसा विसर्जितांशुकप्रसृतां तत्क्षणकठोरकमलदण्डायमानबाहु-

---

उपचितः। प्रतिरूढ़मैरेयं प्रसन्नमद्यम्। मैरेयमासवः सीधुरित्यमरः। घूर्णितमिति क्रियाविशेषणम्। निध्यायति चिन्तयति।

(३१) कषायः सुरभितः। कलहंसो राजहंसः। घोषः शब्दः। घर्घरमस्फुटम्। स्खलितं च्युतम्। एतदुभयं साध्वसवशात्। हर्षसञ्जातस्वरभेदाद्वा। यदाह। स्वरभेदो भयक्रोधमदहर्षादिभिर्भवेत्। भरितकर्णविवरमिति क्रियाविशेषणम्। वस्त्राञ्चलग्रहणेन स्त्रीप्रसादनम्। यदाह। रहसि ग्रहणेनापि हस्ते वस्त्रे च मूर्द्धनि। कार्यं प्रसादनं नार्य्या अपराधं समीक्षता॥ परिभवेण प्रतीकारबुद्ध्या। सभयं पूर्वाननुभवात्। अत्र किं स्यादित्युत्तरङ्गि कम्पवत्। आतङ्काद्धमधमायमानसुवर्णमिव चित्तं यस्यास्ताम्। यद्वा। उत्तरङ्गि उद्गतकल्लोलम्। धमधमायमानं सकम्पम्। कल्लोलश्च कम्पस्योत्तरोत्तरप्रकर्षः। समुत्त्रासयति चकितां करोति।

(३२) सहसा शीघ्रं विसर्जितांशुका त्यक्तवस्त्रा च सा प्रसृता गमनोद्यता

लावलअसंदाणिज्जन्तपीवरुरुप्पडिसिद्धविप्पदीवगमणं पडिऊलवादिणिं पिमं अच्चाअरपअत्तणिव्वत्तिदमुहुत्तकोवोवराअदुक्खपरुसीकिदहिअअं णिसिद्धपुणरुत्तपल्हत्थलोअणविब्भाविदासेसचित्तसारं उवहसदि (ज)। (३२)

दिउणबाहुदण्डावेढणणिअन्तिदं पिअसहि परूढसद्दूलकठोरकररुहोरम्फ-विअडपत्ता-वलीपसाहणुत्ताणवच्छत्थलणिट्ठुरणिवेसणिसहं मं कदुअ साविअविहुअमत्थआविद्धकवरीणिहिदकर- परिग्गहोवग्गिदुस्समिदणिच्चल-सुहावअव-सच्छन्दविआसविअड्ढणअणकमलो वामगण्डमूलोवरिणिहिदप्फुरन्त-

---

बन्धनापवारितपयोधरोद्गमां विघटमानविकटमेखलावलयसन्दानितपीवरोरुप्रतिषिद्धविप्रतीपगमनां प्रतिकूलवादिनीमपि माम् अत्यादरप्रयत्ननिर्वर्तितमुहूर्तकोपोपरागदुःखपरुषीकृतहृदयां निषिद्धपुनरुक्तपर्यस्तलोचनविभाविताशेषचित्तसारामुपहसति ।

(झ) द्विगुणबाहुदण्डावेष्टननियन्त्रितां प्रियसखि ! प्रौढशार्दूलकठोरकररुहाक्रमणविकटपत्रावलीप्रसाधनोत्तानवक्षःस्थलनिष्ठुरनिवेशनिःसहां मां कृत्वा

---

च कर्मधारयः। पुलकितत्वेन च दण्डायमानता। अपवारितोऽपिहितः। उद्गमो विस्तारः। आलिङ्गनविघटनं कृत्वापसरणे कुचालोकनादिकं नायकस्य जायते। नायिका च तदा संवरणाय न प्रभवतीति भावः। तर्हि पलायते किमिति नेत्यत आह। विघटमानेति। विघटमानालिङ्गनज-रोमाञ्चकञ्चुयात्। सन्दानं बन्धनम्। तत् प्रापिताभ्यामित्यर्थः। प्रतीपं प्रतीपं प्रातिकूल्यम्। गमनाभावे पुनःकान्तावरुद्धतया हुं हुमित्यादिनिषेधमाह प्रतिकूलेति। उपरागः सम्बन्धः। निषिद्धपुनरुक्ते पुनःपुनर्निषेधवाक्ये पर्यस्तं निषेधविपरीतं स्निग्धत्वादिधर्मत्वात्। यद्वा। पर्यस्तं विभ्रान्तम्। चित्तसारः सम्भोगेच्छापरता। उपहासः परिहासः। स च हृदि सम्भोगेच्छा वाचि परं ते निषेध इत्येवंरूप इत्यर्थः। स्निग्धपुनरुक्तेति पाठे स्निग्धपुनरुक्तं पुनःपुनः स्निग्धं पर्यस्तं चिप्तं लोचनमित्यर्थः।

(३३) आवेष्टनमावेष्टः। तेन गाढालिङ्गनमुक्तम्। कररुहो नखः।

पुञ्जिदाहरससुग्गअमणुहरप्फंसणिव्भरुव्वसिदसरीर-सोहं उल्ल-सिदसज्झसाणन्दविसमसम्भमवलणमोहमन्थरभमन्तलोअणं किं पि दुव्विणीदसाहसाणुरूवव्ववसाओ मं अणव्भत्थणीअं अव्भत्थेदि (भ्क)। (३३)

पिअसहि! ससक्खं अ सव्वं अणुभविअ भत्ति (३४)

---

सावेगविधुतनस्तकाविद्धकवरीनिहितकरपरिग्रहपुञ्जीकृतोन्नामितनिश्चलमुखावयव-स्वच्छन्दविकासविदग्धवदनकमलां वामगण्डनूलीपरिनिहितप्रस्फुरत्पुञ्जिताधरस-सुन्दरमनोहरस्पर्शनिर्भरोद्धर्षितशरीरशोभां समुल्लसितसाध्वसानन्दविषमसंभ्रमवल-नमोहमन्थरभ्रमल्लोचनां किमपि दुर्विनीतसाहसानुरूपव्यवसायो मामनभ्यर्थनीयम् अभ्यर्थयति।

---

ओरम्फ आक्रमणम्। प्रौढव्याघ्रनखवत् कठोरं यत् कररुहमिति भावः। निष्ठुरं निविडम्। निवेशोऽर्पणम्। निःसहां रचनाद्यक्षमाम्। अत्र कर-रुहाक्रमणमेव पत्रावलीति रूपकम्। चुम्बनमाह। सावेगेति। ओवग्गिदं पुञ्जीकृतं लम्बितमित्यर्थः। मुखावयवा ललाटादयः। विकासितं चुम्बनादि-नियुक्तम्। वदनस्य वैदग्ध्यं चुम्बनचातुर्यात्। इह कन्यायास्त्रिविधं चुम्बनम्। ललितकस्फुरितकघटितकभेदात्। तत्र ललितकमाह। प्रस्फुरितेति। घटि-तकमाह। पुञ्जितं योजितम्। ईषत्परिगृह्य मीलितनेत्रा जिह्वाग्रेण घटयति करेण नेत्रे तस्याच्छादयतीति घटितकम्। स्फुरितकं तु प्रागेवोक्तम्। सुन्दरम उद्रेकः। एवं च सर्वाङ्गीणनायकस्पर्शात् प्रमोदमाह मनोहरेति उद्धर्षितमुन्नत-रोमाञ्चम्। नायिकाया वामाङ्गे सकलोपचारव्यवस्थापनाद्वामकपोलेत्युक्तम्। वर्द्धमानां सुरतावस्थामाह। समुल्लसितेति। समुल्लसिताभ्यां साध्वसानन्दाभ्यां विषमो यः संभ्रमः संवेगस्तत्र मोहेन किं कर्त्तव्यतामूढतया मन्थरत्वमेकतरपक्षा-व्यवस्थितिः। साध्वसेन प्रवृत्तिरानन्देन च निवृत्तिरित्याशयः। अनभ्यर्थनीयं सुरतादिकम्।

(३४) ततो भटितीति जागरावस्थाकथनम्।

पडिबुद्धा सुस्सारस्ससंणिहं पुणो वि मन्दभाइणी विभावेमि जीअलोअं त्ति (ञ)।

लव। [विहस्य।] सहि मदअन्तिए! फुडं आचक्खेहि। अध तस्सिं अवसरे सिणेहविब्भमुम्मीसहासविअसन्तवुद्धरचिदालोअणणिरूविदं परिअणादो गोवणिज्जं दे णिअम्बस्स मूलं सअणिज्जप्पच्छदवडावारिदं भोदि किं ण वेत्ति (ट)। (३५)

मद। अइ असंबद्धपरिहाससीले! अवेहि (ठ)।

बुद्ध। सहि मदअन्तिए! मालदीपिअसही क्खु ईदिसाइं ज्जेव्व मन्तिदुं जाणादि (ड)।

मद। सहि! मा क्खु एव्वं मालदिं उवहस (ढ)।

बुद्ध। सहि मदअन्तिए! भणिस्सं दाणिं दे किं वि जइ ण वीसासभङ्गं करेसि (ण)। (३६)

---

(ञ) प्रियसखि! समचं च सर्वमनुभूय झटिति प्रतिबुद्धा शून्यारण्यसन्निभं पुनरपि मन्दभाग्या विभावयामि जीवलोकमिति।

(ट) सखि मदयन्तिके! स्फुटमाख्याहि। अथ तस्मिन्नवसरे स्नेहविभ्रमोन्मिश्रहासविकसद्बुद्धरचितालोचननिरूपितं परिजनाद्गोपनीयं ते नितम्बस्य मूलं शयनीयप्रच्छदपटापवारितं भवति किं न वेति।

(ठ) अयि असंबद्धपरिहासशीले! अपेहि।

(ड) सखि मदयन्तिके! मालतीप्रियसखी खल्वीदृशान्येव मन्त्रयितुं जानाति।

(ढ) सखि! मा खल्वेवं मालतीमुपहस।

(ण) सखि मदयन्तिके! भणिष्यामि इदानीं ते किमपि यदि न विश्वासभङ्गं करोषि।

---

(३५) धातुत्यागप्रश्नवैदग्ध्यीयमिति भावः। पुष्पवतीशङ्कया परिजनहासनिवारणाय गोपनम्।

(३६) अत्र पृच्छामि यदि इहतं रहस्यं कथयसीति भावः।

मद। सहि! किं पुणो वि पणअभङ्गेण किदावराहो अअं जणो जेण एव्वं मन्तेसि। पिअसहि! तुमं लवङ्गिआए सह सम्पदं मे हिअअं (त)। (३७)

बुद्ध। जइ दे कधं वि मअरन्दो पुणो वि दंसणपहं ओदरदि तदो किं तुए कादव्वं (थ)। (३८)

मद। एक्केक्कावअअणीसङ्गलग्गणिच्चले चिरं लोअणे णिव्वावइस्सं (द)। (३९)

बुद्ध। अध सो वि सम्मद्दबलक्कारिदो कन्दप्पजणणिं तुमं रुक्मिणिं विअ पुरिसोत्तमो सअंग्गाहसहधम्मचारिणिं करेदि तदो का पडिवत्ती? (ध)। (४०)

---

(त) सखि किं पुनरपि प्रणयभङ्गेन कृतापराधोऽयं जनो येनैवं मन्त्रयसि। प्रियसखि! त्वं लवङ्गिकया सह साम्प्रतं मे हृदयम्।

(थ) यदि ते कथमपि मकरन्दः पुनरपि दर्शनपथमवतरति ततः किं त्वया कर्त्तव्यम्।

(द) एकैकावयवनिःसङ्गलग्ननिश्चले चिरं लोचने निर्वापयिष्यामि।

(ध) अथ सोऽपि सन्मर्दबलात्कारितः कन्दर्पजननीं त्वां रुक्मिणीमिव पुरुषोत्तमः स्वयंग्राहसहधर्मचारिणीं करोति ततः का प्रतिपत्तिः?।

---

(३७) अत्र कृतापराध इत्यत्र शिरश्चालनगतिः।

(३८) अत्रात्मसमर्पणमेव त्वया कार्य्यमिति भावः।

(३९) अत्र तद्दर्शनामृतसेकशीतला भविष्यामीति भावः। निःसङ्गः सर्वाङ्गव्यापी।

(४०) अत्राथशब्दो यद्यर्थे। बलात्कारितो बलात्कारेण प्रवर्त्तितः। रुक्मिणी काममाता प्रद्युम्नमातृत्वात्। पक्षे कामावस्थाकारिणीम्। पुरुषो-

मद। [निःश्वस्य।] कीस मं एत्तिअं आसासेसि (न) (४१)

बुद्ध। सहि! कहेहि (प)।

लव। कधिदं ज्जेव्व हिअआवेअसूअएहिं दीहणीसासेहिं (फ)।

मद। सहि! का अहं इमस्स तेण ज्जेव्व अत्ताणअं पणीकदुअ दुट्ठसद्दूलकवलादो कड्ढिअस्स तस्स ज्जेव्व केरअस्स अत्तणो सरीरस्स (ब)। (४२)

लव। सरिसं महाणुभावदाए (भ)। (४३)

बुद्ध। सुमरेहि एदं वअणं (म)। (४४)

---

(न) किं मामेतावदाश्वासयसि।

(प) सखि! कथय।

(फ) कथितमेव हृदयावेगसूचकैर्दीर्घनिःश्वासैः।

(ब) सखि! काहमस्य तेनैवात्मानं पणीकृत्य दुष्टशार्दूलकवलादाकृष्टस्य तस्यैव कृत्यकरस्यात्मनः शरीरस्य।

(भ) सदृशं महानुभावतायाः।

(म) स्मरैतद्वचनम्।

---

तमः कृष्णः। अथ च पुरुषेषु उत्तमो मकरन्दः। स्वयंग्राहेण गान्धर्वेण। सहधर्मचारिणी भार्या। प्रवृत्तिर्वार्त्ता।

(४१) इह मम अभाग्येन किं स्यादिति निःश्वास इति भावः।

(४२) अत्र का अहमात्मशरीरस्य किं तु न कापि। मकरन्दस्यैव मच्छरीरमिति भावः। केरकशब्दः कृत्यकरवाची। पणीकृत्य मूल्यतया यो व्यवस्थाप्यते स कृत्यकरः।

(४३) अत्र महानुभावता कृतज्ञता।

(४४) साम्प्रतमेवैतद्वचनस्योपयोगं स्वीकरिष्याह। स्मरिष्यसि इदं वचनम्।

मद । कधं दुदीअपहरणाडिआविच्छेदपडहो ताडीअदि (४५)। ता जाव णन्दणं णिब्भच्छिअ से पादपडणं अब्भत्थिअ मालदीए उवरि अणुजलइस्सं (य)।

इति उत्थाय गन्तुमिच्छति ।

मकरन्दो मुखमुद्घाट्य हस्तेन गृह्णाति । (४६)

मद । सहि मालदि ! विप्पबुद्धासि । [विलोक्य सहर्षं ससाध्वसञ्च ।] अम्मो (४७) अस्सं ज्जेव्व किं पि एदं वट्टदि (र)।

मक । रम्भोरु ! संहर भयं क्षमते विसोढु-
मुत्कम्पितं स्तनभरस्य न मध्यभागः ।
इत्थं त्वयैव कथितप्रणयप्रसादः
सङ्कल्पनिर्वृतिषु संस्तुत एष दासः ॥ ४८ ॥

बुद्धरचिता मदयन्तिकामुखमुन्नमय्य संस्कृतमाश्रित्य ।

---

(य) कथं द्वितीयप्रहरनाडिकाविच्छेदपटहस्ताड्यते । तद्यावन्नन्दनं निर्भर्त्स्य तस्य पादपतनमभ्यर्थ्य मालत्या उपरि अनुकूलयिष्यामि ।

(र) सखि मालति ! विप्रबुद्धासि । अम्मो अन्यदेव किमप्येतद्वर्त्तते ।

---

(४५) अत्र नाड़ी कालेऽपि षट्क्षण इत्यमरः । षट्क्षणावच्छिन्नः कालो नाड़ी । द्वितीया नाड़ी द्वादशक्षणात्मकः कालः । मदयन्तिकामकरन्दसंवदनविषयस्य समाप्तिपटहोऽयमित्यर्थः । यद्वा । द्वितीयनाड़ी द्वितीयभगिनी मालती तया सह विच्छेदो वियोगो यथोपक्रान्तसम्बन्धविघटनमित्यर्थः ।

(४६) गृह्णाति मदयन्तिकामित्यर्थः ।

(४७) अत्राम्मो इति स्वच्छन्दप्रलपितस्याभिप्रायानुतापे ।

(४८) रम्भोर्विति ! हे रम्भोरु ! सुनितम्बे ! भयं संहर त्यज, मध्यभागः कायस्य मध्यभाग इत्यर्थः । स्तनभरस्य उत्कम्पनं विसोढं न क्षमते । कम्पेन पतनमनुमीयते इत्यर्थः । तेनानुमानालङ्कारः । इत्थमनेन प्रकारेण त्वैव

प्रेयान्मनोरथसहस्रवृतः स एष
सुप्तप्रमत्तजनमेतदमात्यवेश्म।
प्रौढं तमः कुरु कृतज्ञतयैव भद्र-
मुत्क्षिप्तमूकमणिनूपुरमेहि यामः ॥४९॥

मद। सहि बुद्धरक्खिदे! कहिं उण अह्मेहिं गन्तव्वं (ल) (५०)

बुद्ध। जहिं ज्जेव्व मालदी (व)।

मद। किं णिव्वुत्तसाहसा मालदी? (श)। (५१)

---

(ल) सखि बुद्धरक्षिते! क्व पुनरस्माभिर्गन्तव्यम्।

(व) यत्रैव मालती।

(श) किं निर्वृत्तसाहसा मालती?

---

कथितः प्रणयस्य प्रसादः यस्य सोऽहमित्यर्थः। सङ्कल्पनिर्वृतिषु सङ्कल्पितसुखेषु संस्तुतः परिचितो दासोऽस्मीति भावः।

(४९) प्रेयानित्यादि। प्रेयान् प्रियतमो मनोरथसहस्रैर्वृतः प्रार्थितो यस्त्वया सङ्कल्पादिषु अनुभूतः स एष सोऽयमित्यर्थ इति प्रागनुरागाह्लादः। अतः कृतज्ञतया पूर्वोपकारस्य स्मरणेनैव भद्रमभीष्टं विवाहरूपं कुरु। तत्र सामग्रीमाह। एतदमात्यगृहं केचित् सुप्ताः केचित्प्रमत्ता जना यत्र तादृशम्। गाढं तमः। अन्धमिति पाठोऽन्धं करोतीत्यन्धम्। तम इत्यर्थः। उत्क्षिप्तमुत्तोलितमत एव मूकमशब्दं मणिप्रधानं नूपुरं यथा तथेहि यामः। विवाहसम्पादनायेति भावः। तत्र सुप्तादिना गृहलोकानामदर्शनं प्रौढान्धकारतया बहिर्लोकानामदर्शनम्। नूपुरस्याप्यशब्दतया परवितर्काभाव इति गमनमप्रत्यूहं स्यादिति दर्शितम्।

(५०) अत्रानेन मकरन्दस्यातिमाह। यत्रैव मालती वर्त्तते इति शेषः। एतेनागामिनोऽङ्कस्यावतारः सूचितः।

(५१) अत्र पित्रैरपेक्ष्येण मालत्या आत्मनिवेदनं यदि तदा ममापि तत् स्यादित्याशयः।

बुद्ध। अध इं। अस्सं च। तुमं भणासि का अहं इमस्स (ष)।

इत्यादि पठति। मदयन्तिका अश्रूणि पातयति।

बुद्ध। महाभाअ! दिस्सं क्खु अत्ताणं पिअसहीए पडिवज्जस्स (स)। (५२)

मक। अद्योर्जितं विजितमेव मया किमन्यत्
अद्योत्सवः फलवतो मम यौवनस्य।
यस्य प्रसादसुमुखेन समुद्धृतेव
देवेन बान्धवधुरा मकरध्वजेन ॥५३॥

तत् अनेन पक्षद्वारेण निर्गत्य साधयामः।

[ निभृतं परिक्रामन्ति। ]

मक। अहो! निशीथनिःसञ्चाररमणीयता राजमार्गस्य (५४)।

---

(ष) अथ किम्। अन्यच्च। त्वं भणसि काहमस्य।
(स) महाभाग! दत्तं खलु आत्मानं प्रियसख्या प्रतिपद्यस्व।

---

(५२) अत्र च तथा प्रागेव मत्समक्षं त्वया मकरन्दाय आत्मा दत्तः। इदानीं कुतस्तेऽपायमित्याशयः। खड्गहत्यागदुःखादश्रुपातेन सूचितात्मदानां मदयन्तिकामाह। अत्र तुभ्यमिति शेषः।

(५३) अद्येत्यादि। अद्योर्जितं सातिशयं कृत्वा मया विजितम्। सर्वकार्य्यसम्पादनात्। फलवतः सफलस्य मम यौवनस्य अद्योत्सवः। अतः एवान्यत् किम्। अपि तु न किमपि। साध्यमस्तीति शेषः। यस्य मम बान्धवधुरा मित्रकृत्यं प्रसादसुमुखेन प्रसन्नतया सुमुखेन कामदेवेन। समुद्धृता सम्यग्धृता। एवकारोऽप्यत एव। यदि माधवसङ्गतेयं स्यात्तदा मया सर्वाकारं जितं न स्यादिति भावः। कन्यावरणे बान्धवा एव प्रभवन्ति। यदाह। कन्याया वरणे माता पितरौ बान्धवा अपि॥ पक्षद्वारं खड्किका।

(५४) अर्द्धरात्रनिशीथौ द्वावित्यमरः।

तथा हि सम्प्रति।

प्रासादानामुपरि वलभीतुङ्गवातायनेषु
भ्रान्त्वावृत्तः परिचितसुरागन्धसंस्कारगर्भः।
माल्यामोदी मुहुरुपचितस्फारकर्पूरवासो
वायुर्यूनामभिनववधूसन्निधानं व्यनक्ति ॥ ५५ ॥

इति निष्क्रान्ताः सर्वे।

नन्दनविप्रलम्भो नाम सप्तमोऽङ्कः।

---

(५५) प्रासादानामिति। प्रासादानां हर्म्याणां उपरि वलभीस्थानि यानि उच्चवातायनानि तेषु भ्रान्त्वा परिभ्रम्य आवृत्तः प्रत्यावृत्त इत्यर्थः। परिचितः सुरागन्धो यत्र तादृशो यः संस्कारः स गर्भे यस्य तथा माल्यामोदी माल्यपरिमलवाही मुहुर्नितराम् उपचितः वर्द्धमानः स्फारः विपुलः कर्पूरवासः यस्य स वायुः यूनाम् अभिनववधूसन्निधानम् अभिनवानां वधूनां सन्निधानं सामीप्यं व्यनक्ति सूचयति ॥

# अष्टमोऽङ्कः ।

—००—

ततः प्रविशति अवलोकिता । (१)

अव । बन्दिदा मए णन्दणावासपडिणिउत्ता भअवदी, ता जाव मालदीमाहवसआसं गच्छामि । [परिक्रम्य ।] एदे दे णिव्वत्तिदगीह्मदिअहावसाणमज्जणा (२) दीहिआतडसिलातलं अलङ्करन्ति मालदीमाहवा ता जाव उवसप्पिस्सं (क) ।

इति निष्क्रान्ता प्रवेशकः ।

ततः प्रविशतः उपविष्टौ मालतीमाधवौ अवलोकिता च ।

माध । [स्वगतं सानन्दम् ।] वर्त्तते हि मन्मथप्रौढ़सुहृदो निशीथस्य यौवनश्रीः । तथाहि

---

(क) वन्दिता मया नन्दनावासप्रतिनिवृत्ता भगवती । तद्यावन्मालतीमाधवसकाशं गच्छामि । एतौ तौ निर्वर्त्तितग्रीष्मदिवसावसानमज्जनौ दीर्घिकातटशिलातलमलङ्कुरुतो मालतीमाधवौ । तद्यावदुपसर्प्स्यामि ।

---

(१) तदेवं मदयन्तिकामादाय मकरन्दे माधवान्तिकं चलिते मालतीमादाय निर्गतस्य माधवस्य कामन्दकीगृहस्थितस्य वार्त्ताप्रस्तावनाय अवलोकिताप्रवेशः । सूचनं च पूर्वाङ्के । जहिं ज्जेव्व मालतीति वचनेन मालतीमाधवयोरेकत्र वासः सूचितः । तत्र च यद्यपि तयोरेव प्रवेशोऽर्हति तथापि कन्याप्रलोभने सख्यानुकूल्ये तत् प्रवेश इति पूर्वाङ्के कृतमेव ।

(२) अत्र सरो वापी तु दीर्घिकेत्यमरः ।

दलयति परिशुष्यत्प्रौढतालीव पाण्डु-
स्तिमिरनिकरमुद्यन्नैन्दवः प्राक्प्रकाशः।
वियति पवनवेगादुन्मुखः केतकीनाम्
प्रचलित इव सान्द्रो मन्दमन्दं परागः॥ ३॥

तत्कथं वामशीलां मालतीमुपावर्त्तये, भवतु एवं तावत् [ प्रकाशम्। ] प्रिये मालति! प्रत्यग्रसायन्तनस्नानविशेषशीतलामत्रभवतीं निदाघतापशान्तये विज्ञापयामि तत्किमिति नित्यमन्यथैव मां सम्भावयसि ?।

निश्शीतन्ते सुतनु! कवरीविन्दवो यावदेते,
यावन्मध्यः स्तनयुगलयोर्नार्द्रभावं जहाति।
यावत्सान्द्रप्रतनुपुलकोद्भेदवत्यङ्गयष्टि-
स्तावत् गाढं वितर, सकृदप्यङ्कपालीं प्रसीद॥ ४॥

अयि निरनुरोधे!

---

(३) दलयतीति। परिशुष्यत्प्रौढ़तालीव, पाण्डुस्तत्समवर्ण इवेत्युत्प्रेक्षा। उद्यन् उदयमानः ऐन्दवः प्राक्प्रकाशः प्रथमस्फुरणं तिमिरनिकरं दलयति विनाशयति। पुनस्तवोत्प्रेच्यते। केतकीनां पुष्पाणां परागः पवनवेगात् वियति आकाशे उन्मुखः सान्द्रश्च सन् मन्दमन्दं प्रचलित इव। नेदमिन्दुस्फुरणं किन्तु वातचलितकेतकीनिविड़परागएवेति भावः।

(४) निश्शीतन्त इति। हे सुतनु! शुभाङ्गि! एते कवरीविन्दवः कवरीसन्न्यस्तकुसुमरसलेशा इत्यर्थः। यावन्निश्शीतन्ते भ्रंशन्ति। मध्यो मध्यदेशः स्तनयुगलयोरार्द्रभावं घर्मोदयेन शैत्यमित्यर्थः। यावन्न जहाति, तथा अङ्गयष्टिः सान्द्रैर्घनैः प्रतनुभिः सूक्ष्मैरवयवैरित्यर्थः। पुलकोद्भेदैर्लोमहर्षस्फुरणैर्युक्ता तद्वतीत्यर्थः यावत् सकृदेकवारमपीत्यर्थः गाढ़ं यथा भवति तथेत्यर्थः। अङ्कपालीमालिङ्गनम् इति यावत् वितर देहि प्रसीद प्रसन्ना भव।

जीवयन्निव समूढसाध्वसस्वेदबिन्दुरधिकण्ठमर्प्यताम्।
बाहुरैन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रमः ॥५॥

अथवा, दूरे तावदेतत्, कथमालापसंविभागस्य अपि अभाजनम् अयं जनो भवत्याः।

दग्धं चिराय मलयानिलचन्द्रपादै-
र्निर्वापितन्तु परिरभ्य वपुर्न नाम।
आमत्तकोकिलरुतव्यथिता तु हृद्या-
मद्य श्रुतिः पिबतु किन्नरकण्ठि! वाचम् ॥ ६ ॥

अव। [उपसृत्य।] अइ अणिव्वहनसीले! जं दाणिं मुहुत्तं अदिट्ठमाहवा दुम्मणाअन्ती मम पुरदो भणासि चिराअदि अज्जउत्तो, अवि णाम केच्चिरेण पेक्खिस्सं जेण विच्छड्डिआसेससज्झसा विसुमरिदणिमेसविग्घमवलोअअन्ती, एव्वं भणिस्सं, द्विउणावेट्टनपरिरम्भेण सम्भावअसित्ति सम्पदं तस्सिं दे अअं परिणामो (ख)।

---

(ख) अयि अनिर्वहणशीले! यदिदानीं मुहूर्त्तमात्रान्तरितमाधवापि दुर्मनायमाना मम पुरतो भणसि, चिरयति आर्य्यपुत्रः अपि नाम कियच्चिरेण प्रेक्षिष्ये येन विच्छर्दिताशेषसाध्वसा विस्मृतनिमेषविघ्नमालोकयन्ती एवं भणिष्यामि द्विगुणावेष्टनपरिरम्भेण सम्भावयेः इति, साम्प्रतं तस्मिंस्तेऽयं परिणामः।

---

(५) जीवयन्निति। समूढ़ उद्भिन्नः साध्वसजनितस्वेदबिन्दुर्यत्र स, तथा ऐन्दवैः चन्द्रसम्बन्धिभिर्मयूखैः किरणैः चुम्बितस्य स्पृष्टस्य अतएव स्यन्दिनः द्रवीभूतस्य चन्द्रमणिहारस्य चन्द्रकान्तमणिविशेषनिर्मितहारस्य, चन्द्रोदयेहि चन्द्रकान्तमणिगलनप्रसिद्धेरिति भावः। तस्य विभ्रम इव विभ्रमो यस्य स बाहुरधिकण्ठं कण्ठे सप्तम्यर्थेऽव्ययीभावः। जीवयन्निव मां जीवयितुमिच्छन्निवेत्युत्प्रेक्षा। अर्प्यतां दीयताम्। तव बाहुवलयनेन जीवितुमिच्छामीति भावः।

(६) दग्धमिति। चिराय बहुदिनपर्य्यन्तमित्यर्थः। मलयानिलेन चन्द्रपादैश्चन्द्रकरैश्च दग्धं वपुर्ममेत्यर्थः परिरभ्य आलिङ्ग्य न निर्वापितं नोपशमितं

मालती। सासूयमिव तां पश्यति (७)।

माध। [स्वगतम्।] अहो! भगवतीप्रधानान्तेवासिन्याः सर्वतोमुखं वैदग्ध्यं, अक्षयश्च सुभाषितरत्नकोषः। [प्रकाशम्।] प्रिये! सत्य मवलोकिता वदति?।

मालती तिर्य्यङ्मूर्द्धानं चालयति। (८)।

माध। शापितासि (९) मया लवङ्गिकावलोकितयोर्जीवितेन यदि वाचा न कथयसि।

माल। नाहं किम्बि जाणामि। (ग)

इत्यर्द्धोक्ते लज्जां नाटयति।

माध। अहो! अनवसितार्थमन्थरस्य वचसश्चारुता। [सहसा निरूप्य।] अवलोकिते! किमेतत्?। (१०)

---

(ग) नाहं किमपि जानामि।

---

नामेति सत्ये। तेन हे किन्नरकण्ठि! आमत्तस्य कोकिलस्य रुतेन रवेण व्यथितां उपतप्ता श्रुतिः श्रवणेन्द्रियम् अद्य हृद्यां हृदयसन्तोषिणीं वाचं तवेत्यर्थः पिबतु शृणोतु इत्यर्थः। पूर्वं पिकरवेणाप्यसन्तुष्टं श्रवणं त्वदीयवचसा सन्तोषयेति भावः।

(७) अत्र यदिदानीमिति वाक्यभूषायाम्। भणनस्वरूपमेवाह चिरयतीति सम्भावयेरितीत्यन्तम्। साम्प्रतमिति शिरश्चालनकाले। चिरयति विलम्वते। विच्छर्दितं त्यक्तम्। विघ्नसिति क्रियाविशेषणम्। परिणाम इति। या त्वं चिरविरहमसहमाना माधवार्थिनी सा कथमधुना तव वाग्यमनमालम्बसे इति भावः। असूया गुणेषु दोषारोपः। सा चेह रहस्यनिवेदनादिति भावः।

(८) सर्वतोमुखं सर्वतोगामि। सुभाषितान्येव रत्नानि तेषां कोषः पात्रम्। कोषोऽस्त्री कुड्मले पात्रम् इति मेदिनीकारः। प्रियेत्यादि प्रश्नवाक्यम्।

(९) शापितासि शपथीकृतासि।

(१०) अनवसितोऽनिश्चितः। किमेतदिति वक्ष्यमाणवाक्यार्थस्य प्रश्नः।

वाष्पाम्भसा स्नगदृशो विमल: कपोल:
प्रचाल्यते सपदि राजत एष यस्मिन्।
गण्डूषपेयमिव कान्त्यमृतं पिपासु-
रिन्दुर्निवेशितमयूखमृणालदण्ड: ॥ ११ ॥

अव। सहि! किं दाणिं उच्छलिदबाह्रप्पीलमन्थरां रोदिसि (घ)। (१२)

माल। [जनान्तिकम्।] केच्चिरं पिअसहीए लवङ्गिआए असस्णिधानदु:क्खमणुभविस्सं पउत्तिलम्भोवि से सुदुल्लहोत्ति (ङ)। (१३)।

माध। अवलोकिते! किं नाम?।

अव। तुह ज्जेव्व सवधोवण्णासेण एसा लवङ्गिअं सुमरिअ, ताए पउत्तिणिमित्तं उत्तम्मदि (च)।

---

(घ) सखि! किमिदानीमुच्छलितवाष्पोत्पीड़मन्थरं रोदिषि।

(ङ) कियच्चिरं प्रियसख्या लवङ्गिकाया असन्निधानदु:खमनुभविष्यामि प्रवृत्तिलम्भोऽपि तस्या सुदुर्लभ इति।

(च) तवैव शपथोपन्यासेन एषा लवङ्गिकां स्मृत्वा तस्या: प्रवृत्तिनिमित्तमुत्ताम्यति।

---

(११) वाष्पेत्यादि। हरिणाच्या एष कपोलो वाष्पजलेन सपदि प्रचाल्यते अत एव विमल:। किमेतत्। यत्र चन्द्रो राजते। कीदृक्। गण्डूषेण मुखपूरणेन पातव्यं दीप्तग्रमृतं पातुमिच्छुरिव निहित: किरण एव मृणालदण्डो येन स:। किरणरूपमृणाललतिकया पातुमिच्छतीत्यर्थ:। अनेन कपोलस्य चन्द्राधिककान्तिमत्त्वमुक्तम्। गण्डूषो मुखपूर्त्तौ स्यादिति शाश्वत:।

(१२) उत्पीडो बहुलीभवन्। मन्थरमिति क्रियाविशेषणम्।

(१३) अत्रासन्निधानदु:खमसङ्गमेन जनितक्लेशम्। प्रवृत्तिलम्भो वार्त्ताप्राप्ति:। वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्त: स्यादथाह्वय इत्यमर:।

माध। ननु इदानीमेव मया कलहंसकः प्रहितः, प्रच्छन्नः सन्निपत्य नन्दनावासप्रवृत्तिमुपलभस्वेति। [साशंसं।] अवलोकिते! अपि नाम वृद्धरचितप्रयत्नः सफलोदर्क एव मदयन्तिकां प्रति स्यात्?।

अव। कुदो सन्देहो महाणुभाअस्स? महाभाअ! पढमं ज्जेव्व सद्दूलणहरालङ्किदस्स मकरन्दस्स मोहविरामसहूसवं णिवेदअन्तीए मालदीए भगवदीए, णिउत्तेण भवदा समं जीविदेण, हिअअं पसादीकिदं। जइ कोवि तुमं मदअन्तिआलम्भेण सम्पदं वद्धावेदि, किं तस्स पारितोसिअं भविस्सदि? (छ)। (१४)

माध। अनयानुयोक्तव्यमनुयुक्तोऽस्मि। [हृदयमवलोक्य] इयमस्ति मालतीप्रथमदर्शनाभिषङ्गसाक्षिणः कामकाननालङ्कारस्य लक्ष्मीवतः केसरतरोः प्रसवमाला (१५)।

प्रेम्णा मदुग्रथितेति या प्रियसखीहस्तोपनीतानया,
विस्तारिस्तनकुम्भकुड्मलभरोत्सङ्गेन सम्भाविता।

---

(छ) कुतः सन्देहो महानुभावस्य? महाभाग! प्रथममेव शार्दूल नखरालङ्कृतस्य मकरन्दस्य मोहविराममहोत्सवं निवेदयन्त्यै मालत्यै भगवत्या नियुक्तेन भवता जीवितेन समं हृदयं प्रसादीकृतं यदि कोऽपि त्वां मदयन्तिकालम्भेन सम्प्रति वर्द्धापयति तदा किं तस्य पारितोषिकं भविष्यति।

---

(१४) अत्र निवेदयन्त्या मालत्या इत्यन्वयः। मालत्याः कृत इत्यर्थः।

(१५) अनुयुक्तः पृष्टः। स्वकीयहृदयालोकनमागामिश्लोकस्थरसद्योतनाय। प्रसवः पुष्पम्।

(१६) प्रेम्णेत्यादि। या माला प्रियसख्या लवङ्गिकया हस्तेनोपनीता मदग्रथितेति हेतोः प्रेम्णा अनया मालत्या पीनकुचघटमुकुलस्य भरो यत्र तेन

सम्प्राप्ते त्वथ पाणिपीडनविधौ मां प्रत्यपिताशया
या मय्येव लवङ्गिकेत्यवगते सर्वस्वदायीकृता ॥ १६ ॥

अव। सहि मालदि ! बल्लहा क्खु दे इअं बउलमाला, तदो अबहिदा भव, मा दाणिं एसा सहसा ज्जेव्व परहत्थ-गदा भविस्सदित्ति (ज)। (१७)

माल। पिअं पिअसही मे उवदिसति (झ)। (१८)

अव। कधं पदसद्दो विअ (ञ)। (१९)

माध। [नेपथ्याभिमुखमवलोक्य। ] अये! कलहंसकः प्राप्तः।

माल। दिट्ठिआ वड्ढसि मदअन्तिआलम्भेण (ट)। (२०)

---

(ज) सखि! मालति! वल्लभा खलु इयं ते वकुलमाला ततोऽवहिता भव, मा इदानीमप्येषा सहसैव परहस्तगता भविष्यतीति।

(झ) प्रियं प्रियसखी मे उपदिशति।

(ञ) कथं पदशब्द इव।

(ट) दिष्ट्या वर्द्धसे मदयन्तिकालाभेन।

---

क्रोड़ेन सह सम्भाविता सम्भावनां नीता ततो नन्दनेन सह विवाहे संप्राप्ते मां प्रति अपिताशया निरस्तप्रत्याशया लवङ्गिकेयमित्यधिगते मय्येव यया सर्वस्वदानं कृतम्। अनेन पूर्वानुरागकथनेन नायिकाविस्रम्भ उक्तः। विस्तारः परिणाहः। कुम्भपदेन उन्नतता। कुड्मलपदेन मृदुता। भरशब्देन प्रौढ़िरुक्ता। पाणिपीड़नं विवाहः। दीयत इति दायः।

(१७) अत्र येनैव मकरन्दस्य मदयन्तिकालाभः कथनीयस्तेनैवेयं प्राप्या। अतस्त्वमेव तं कथयेति गुप्त्या माधवेन सहात्मानं सम्भावयेत्याशयः।

(१८) तथा चाहमेव कथयामीति भावः।

(१९) अत्र श्रूयत इति भावः।

(२०) अत्र मकरन्दस्य मदयन्तिकाविवाहेनेत्यर्थः। इदं वचनं मालत्या माधवं प्रति।

माध। [सहर्षं परिष्वज्य।] प्रियं नः (२१)।

आत्मनः कण्ठादवतार्य्य वकुलमालां ददाति।

अथ। णिव्वूढो क्खु भअवदीए सम्भावणाभारो बुद्धरक्खिदाए (ठ)। (२२)

माल। [सहर्षं] अम्महे (२३) पिअसही लवङ्गिआवि दीसई। (ड)

सर्वे उत्तिष्ठन्ति।

ततः प्रविशन्ति संभ्रान्ताः कलहंसमदयन्तिकाबुद्धरक्षितालवङ्गिकाः।

लवङ्गिका। परित्ताअदु परित्ताअदु महाभाओ, अद्धमग्गे क्खु णअररक्खिपुरुसाभिजोओ मअरन्दस्स जादो, तदो तक्काल-मिलिदेण कलहंसएण सहिदा अह्मे अणुप्पेसिदाओत्ति (ढ)। (२४)

कल। जधा इदो सुहागदेहिं अह्मेहिं महन्तो जोधकल-

---

(ठ) निर्व्यूढ़ः खलु भगवत्याः सम्भावनाभारो बुद्धरक्षितायाः।

(ड) अम्महे प्रियसखी लवङ्गिकापि दृश्यते।

(ढ) परित्रायतां परित्रायतां महाभागः अर्द्धमार्गे खलु नगररक्षिपुरुषाभियोगो मकरन्दस्य जातस्ततस्तत्कालमिलितेन कलहंसकेन समं वयमनुप्रेषिता इति।

---

(२१) प्रियं न इति। आलापलाभेनातिप्रियमित्यर्थः।

(२२) अत्र निर्व्यूढो निर्वाहं नीतः। खलु निश्चये। सम्भावना प्रतिष्ठा।

(२३) अम्महे विस्मये।

(२४) अत्राभियोगो अवस्कन्दः।

कलो सुदो तधा तक्केमि अस्सिम्पि पारक्कं बलं उवगदंत्ति (ण)। (२५)

माल। अवलोइदे! हद्धी हद्धी! समकालं ज्जेव्व हरिसुव्वेअसम्भेदो उवगदो (त)।

माध। सखि मदयन्तिके! स्वागतमिह्येहि, अनुगृहीतमस्मद्गृहं भवत्याः ननु स एवासौ, माभूत्परिभवोद्वेगः, किमित्यस्वस्था भवती, एकाकिनो बहुभिरभियोग इति न किञ्चिदेतद्वयस्यस्य (२६)। पश्य।

हरेरतुलविक्रमप्रणयलालसस्याहवे,
स एष भवति क्षणत्काररुद्रप्रचण्डः सखा।
स्फुरत्करटकोटरस्खलितदानसिक्तानन-
द्विपेश्वरशिरःस्थितास्थिदलनैकवीरः करः॥ २७॥

---

(ण) यथा इतो मुखागतैर्महान् युद्धकालकलः श्रुतोऽस्माभिस्तथा तर्कयामि अन्यदपि पारक्यं वलमुपगतमिति।

(त) अवलोकिते! हा धिक्! हा धिक्! समकालमेव हर्षोद्वेगसम्भेद उपगतः।

---

(२५) अत्र पारक्यं परकीयम्।

(२६) स्वागतं कुशलम्। स एव प्रसिद्धपौरुषः। असौ मकरन्दः। न किञ्चिदिति न गणनीयमित्यर्थः।

(२७) आहवे युद्धे अतुलविक्रमप्रणयलालसस्य विपुलपराक्रमप्रकाशसतृष्णस्य हरेः सिंहस्य स्फुरतः करटस्य गण्डस्य कोटरात् स्खलितेन दानेन मदजलेन सिक्ताननस्य द्विपेश्वरस्य मत्तगजवरस्य शिरःस्थितानां मस्तकस्थितानां अस्थ्नां दलने विदारणे एकवीरः श्रेष्ठवीरः तथा क्षणद्भिः शब्दायमानैः कररुहैः नखरैः प्रचण्डः भीषणः स एव करः हस्तः सखा सहायी भवति। विक्रमप्रकाशने वीरपुरुषो मकरन्दः नान्यसाहाय्यमपेक्षते इति भावः।

तदहमपि विक्रमानुरूपं विलसतः प्रियसुहृदः प्रत्यनन्तरो भवामि (२८) ।

इति विकटं परिक्रामन् कलहंसकेन सह निष्क्रान्तः ।

अवलोकितालवङ्गिकाबुद्धरक्षिताः ।

अवि णाम अणाहदा पडिणिअत्तिस्सन्ति एदे महाणुभाआ ? (थ) ।

माल । सहिओ अवलोइदाबुद्धरक्खिदाओ ! तुरिअं गदुअ भअवदीए इमं वुत्तन्तं णिवेदह, तुमम्पि पिअसहि लवङ्गिए ! तुरिदं विण्णवेहि अज्जउत्तं जइ ताव तुह्माणं अह्मे अणुकम्पणीआ तदो अप्पमत्ता परिक्कमेत्ति (द) ।

निष्क्रान्ता अवलोकितालवङ्गिकाबुद्धरक्षिताः ।

माल । हद्धी ! हद्धी ! ण आणीअदि लवङ्गिआ किं चिराअदि कधं एत्तिआ वेला गमिअदुत्ति, भोदु, पिअसहि मदअन्तिए ! पिअसहीए लवङ्गिआए पडिणिउत्तिमग्गमणुगमिस्सं (ध) ।

---

(थ) अपि नाम अनाहतौ प्रतिनिवर्त्तिष्येते एतौ महानुभावौ ।

(द) सख्यौ अवलोकिताबुद्धरक्षिते ! त्वरितं गत्वा भगवत्या इमं वृत्तान्तं निवेदयत् त्वमपि प्रियसखि लवङ्गिके ! त्वरितं विज्ञापय आर्य्यपुत्रं, यदि ताव-द्युष्माकं वयमनुकम्पनीयास्ततोऽप्रमत्ताः परिक्रामतेति ।

(ध) हा धिक् ! हा धिक् न ज्ञायते लवङ्गिका किं चिरायति, कथमेतावती वेला गम्यते इति, भवतु प्रियसखि मदयन्तिके ! प्रियसख्या लवङ्गिकायाः प्रति-निवृत्तिमार्गमनुगमिष्यामि ।

---

(२८) विक्रमस्य पराक्रमस्य अनुरूपं सदृशं विलसतः कुर्वतः । प्रत्यनन्तरो द्वितीयः ।

परिक्रामति।

[ सातङ्कम् ] फुरिदं वामिदरेण लोअणेण (न)। (२९)

उपविशति।

[प्रविश्य। कपालकुण्डला। ] आः पापे ! तिष्ठ।

मालती। [सत्रासम्। ] हा अज्जउत्त !

[ इत्यर्द्धोक्ते वाक्स्तम्भं नाटयति। ]

कपा। [सक्रोधम्। ] नन्वाक्रन्द, नन्वाक्रन्द।

त्वद्वत्सलः क्व स तपस्विजनस्य हन्ता,
कन्याविटः पतिरसौ परिरक्षतु त्वाम्।
श्येनावपातचकिता वनवर्त्तिकेव,
किं चेष्टसे ननु चिरात्कवलीकृतासि ॥ ३० ॥

यावत् श्रीपर्वतमुपनीय लवशो लवश एनां निकृत्य दुःखमरणां करोमि।

---

(न) स्फुरितं खलु वामेतरेण नयनेन।

---

(२९) अवामी दक्षिणः। दक्षिणाक्षिस्पन्दनं स्त्रीणामनिष्टसूचकमिति भावः। अनेन कपालकुण्डलाप्रवेशोऽपि सूचितः।

(३०) त्वदिति। तपस्विजनस्य अस्मद्गुरोः अघोरघण्टस्य हन्ता तव वत्सलः त्वां प्रति कृपालुरित्यर्थः स माधवः क्व विद्यते इति शेषः। कन्याविट् स्त्रीकामुकः असौ पतिर्माधवः त्वां परिरक्षतु। श्येनस्य पक्षिविशेषस्य अवपातेन चकिता भीता वनवर्त्तिका वनपक्षिणीव किं किमर्थं चेष्टसे इति भावः। चेष्टसे। ननु भो मालति ! चिराद् बहुदिनात् परं कवलीकृतासि मम हस्ते पतितासि। अधुना श्येनपात-भीतवनक्षुद्रपक्षिण्या इव ते सर्वं चेष्टितं विफलमिति भावः। अतः परस्पर-सादृश्याक्षेपात् निदर्शना।

इति मालतीमाक्षिप्य निष्क्रान्ता (३१)।

मद। अहम्पि मालदीं ज्जेव्व अणुगमिस्सम्।

[ परिक्रम्य। ] पिअसहि मालदि! (प)।

[ प्रविश्य लवङ्गिका। ] सहि मदअन्तिए! लवङ्गिआ क्खु अहम्। (फ)

मद। अवि सम्भाविदो तुए महाणुभाओ (ब)। (३२)

लव। णहि, णहि, सोक्खु उज्जाणवाडोवणिग्गमादो ज्जेव्व कलकलं सुणिअ, सावक्खेवाबविद्धविकटोरुदण्डणिब्भरं पधाविअ, पराणीअं पविट्टो, तदो पडिणिउत्तम्हि अन्दभाइणी, सुणामि अ घरे घरे गुणाणुराअकाअरस्स पौललोअस्स, हा महाणुभाअ! हा माहव! हा मअरन्द! हा साहसिअ! त्ति परिदेवणाओ, महाराओपि किल एदाणं सन्निधीआणं बिप्पलम्भवुत्तन्तं सुणिअ, सञ्जाअसच्छराधि-

---

(प) अहमपि मालतीमनुगमिष्यामि प्रियसखि मालति!

(फ) सखि मदयन्तिके! लवङ्गिका खलु अहम्।

(ब) अपि सम्भावितस्त्वया महानुभावः।

---

(३१) आक्षिप्य गृहीत्वा।

(३२) अत्रापि प्रश्ने। सम्भावितो लब्धः।

(३३) अत्र उपनिर्गमः समीपगमनम्। एतेन मार्गस्य शून्यत्वमुक्तम्। अवक्षेपोऽवहेला। अपविद्धमाक्रान्तम्। विशालोरुयुगलदण्डाभ्यां निर्भरं गाढ़ं यथा तथा धावित्वेत्यर्थः। अनीकं सैन्यम्। धिषा दुहिता। विप्रलम्भो वञ्चनम्।

क्खेबो, तक्खणविसज्जिदपौढ़पाइक्कणिवहो चन्दादवेण सौह-सिहरट्ठिदो पेक्खदित्ति मन्तीअदि (भ)। (३३)

मद। हा हदह्मि! मन्दभाइणी। (म)

लव। सहि! मालदी उण कहिं?। (य)

मद। सा क्खु पढमं ज्जेव्व दे मग्गमवलोइदुं पसरिदा, पच्छादो अहं ण तां पेक्खामि। अवि णाम उज्जाणगहणे पविट्टा भवे? (र)। (३४)

लव। सहि! तुरिदं अस्ससह्म। अदिकाअरा णो पिअ-सही इमस्सिं अवसरे ण धारेदि अप्पाणम्। [त्वरितं परि-

---

(भ) नहि नहि स खलु उद्यानवाटीपनिर्गमादेव कलकलं श्रुत्वा, सावचेपाव-विद्धविकटोरुदण्डनिर्भरं प्रधाव्य परानीकं प्रविष्टः ततः प्रतिनिवृत्तास्मि मन्द-भागिनी, शृणोमि च गृहे गृहे गुणानुरागकातरस्य पौरलोकस्य हा महानुभाव माधव! हा मकरन्द! हा साहसिक! इति परिदेवनाः, महाराजोऽपि किलैतयोर्मन्त्रिदुहित्रोर्विप्रलम्भवृत्तान्तं श्रुत्वा, सञ्जातमत्सराधिचेपस्तत्चणविसर्जित-प्रौढपदातिनिवहश्चन्द्रातपेन सौधशिखरस्थितः प्रेचत इति मन्त्र्यते।

(म) हा हतास्मि मन्दभागिनी।

(य) सखि! मालती पुनः क्व?

(र) सा खलु प्रथममेव ते मार्गमवलोकयितुं प्रसृता, पश्चादहं न च तां पश्यामि। अपि नाम उद्यानगहने प्रविष्टा भवेत्?

---

चन्द्रातपश्चन्द्रप्रकाशः। मालत्या वियोगदशायां तापकत्वेनानुभवादातप इत्युक्तम्। मन्त्र्यते पौरलोकेनैव।

(३४) अत्र प्रसृता निर्गता। अहं प्रसृतेत्यन्वयः। अपीत्यादि शङ्कायाम्।

क्रम्य ।] सहि मालदि ! णं भणामि सहि मालदित्ति (ल)।
(३५)

इतस्ततः परिक्रामतः ।

[प्रविश्य प्रहृष्टः कलहंसकः । ] दिट्टिआ कुसलेण अह्मे णिग्गदा समरसङ्कट्टदुग्गमादो। हीमाणहे ! पेक्खामि विअ णिम्मलणिरन्तरुद्भूत-धोद-तरवारिधारा-पडिफलिद-चन्दकिरणुज्जलबिडुरिल्लदंसणं, मदलीलाकलिदकामपालबिअटभुज-दण्डाविद्ध--हलहेला--विब्भलिदुद्दे ल्लदुत्तरङ्ग--कलिन्द--तणआ-सोतसच्छिहं, बिअटबिसङ्कलुप्पडिदणिद्दअअमन्दमअरन्दव्वदिअ-रक्खोभबिअडपडिजोध-पडिवत्तणुग्गदसमत्थगअणङ्गणावआस-बिअसल्कलकलं पारक्कबलसमूहम् (व) (३६)।

(ल) सखि । त्वरितमन्विष्याव: । अतिकातरा न: प्रियसखी अस्मिन्नवसरे न धारयत्यात्मानम् । सखि मालति ! ननु भणामि मालतीति ।

(व) दिष्ट्या कुशलेन वयं निर्गता: समरसङ्कटदुर्गमात् । हीमानहो प्रेचे इव निर्मलनिरन्तरोद्भूतधौततरवारिधाराप्रतिफलितचन्द्रकिरणोज्ज्वलितविकटदर्शनं मद-लीलाकलितकामपालविकट-भुजदण्डाविद्धहलहेलाविह्वलितोद्वेल्लित-तरङ्गकलिन्द-तनयास्रोत:सन्निभं विकटविशृङ्खलोत्पतितनिर्दयामन्दमकरन्दव्यतिकरक्षोभविकट-प्रतियोधपरिवर्त्तनोद्गतसमस्तगगनाङ्गनावकाशविकसत्कलकलं पारक्यबलसमूहम् ।

(३५) अत्र नन्विदम् । अव्ययत्वादनेकार्थत्वम् । तथा च । मद्वचनमपि न शृणोषीत्यर्थः ।

(३६) अत्र हीमाणहे इति हे मातरितिवन्नीचस्य हर्षाश्चर्य्ये । पश्यामीव पर-बलमित्यन्वय: । धौतो निशित: । तरवारि: खड्ग: । विडुरिल्लं भीषणम् । कलित: स्वीकृत: । कामपालो हलायुध इत्यमर: । आविद्धा वक्रं प्रेरिता । हेला क्रीड़ा । कलिन्दतनया यमुना । सन्निभमिति यथा बलेन हलाकृष्टा यमुना प्रतीपमागता तथा परबलमपीति भाव: । विस्तारेण वा बलस्य तादृग्यमुनासाम्यम् । विकटं

अविअ। सुमरामि भीसणभुअवज्जजज्जरिदपञ्जराव-सरिदसुभडहत्थावलुत्तविविहाउहणिवहघातिदासेस–रिउसेखं हदविअडापसारपाइक्कसुसमग्गसञ्चारणिवत्तिद-विसम--समर-साहसं णाहमाहवम् (अ) (३७)।

अहो गुहाणुराओ णरिन्दस्स। जं दाणिं सोहसिह-रोत्तिसपडिहारविणओपसासपडिसमिद-विरोहसङ्कडोवणीदे माहवसअरन्दसुहचन्दे बारंवारं सञ्चारिदसिणिद्धलोअणो, कलहंसआदो अभिजणं जाणिअ, णिवत्तिदमहग्घबहुमाणो, प्पफुरिदमत्सर वेलक्ख-मसी-मलिणिअ-मुहे भूरिवसुणन्दणे सहु-रवअणोवण्णासेण, किंदाणिं तुह्माणं भुअणाभोअभूसणेहिं महाणुभावेहिं अभिजणदंसणगुणाहिरामेहिं णवचन्द-दंसण-रमणीएहिं जामादुएहिं परितोसोत्ति पडिवोहिअ, गदो

---

(अ) अपिच स्मरामि भीषणभुजवज्रजर्जरितपञ्जरापसृतसुभटहस्तावलुप्त-विविधायुधनिवहघातिताशेषरिपुसैन्यं हतविकटापसारपदातिशून्यमार्गसञ्चार-निवर्त्तितविषमसमरसाहसं नाथमाधवम्।

---

विस्तीर्णं यथा तथा। विशृङ्खलः स्वच्छन्दः। आपतितः सम्मुखागतः। निर्दयो निष्करुणः। अमन्दः सत्वरः। व्यतिकरेण मिलनेन क्षोभः। परिवर्त्तनेन पलायनेन। उद्गत उत्थितः। विशङ्खितो व्याप्तः। दोर्दोषा भुजा भुज इति शब्दप्रकाशः।

(३७) जर्जरितपञ्जरा क्षत एवापसृताः पलायिताः सुभटाः तेषां हस्तेभ्योऽव-लुप्त आच्छिन्नः विविधायुधनिवहः तैः घातितम् अशेषरिपुसैन्यं येन तम्। विकटो विषमः। अपसारः पलायनम्। शून्यः। रिक्तः।

(३८) सौधेति। प्रतीहारेण सौधाग्रादवतीर्य्य तयोः स्वरूपं ज्ञात्वा,

अब्भन्तरं राआ। इमेवि माहवमअरन्दा आअच्छन्ति। अहम्वि भअवदीए एदं वुत्तन्तं निवेदेमित्ति (घ)। (३८)
निष्क्रान्तः।

ततः प्रविशतो माधवमकरन्दौ।

मक। अहो प्रेयसः सर्वपुरुषातिशायि निर्व्याजमूर्जितं-तेजः। (३९)
तथाहि।

दोर्निष्पेषविशीर्णसञ्चयदलत्कङ्कालमुन्मथ्नतः
प्राग्वीराननुपत्य तत्प्रहरणानाच्छिद्य विक्रामतः।
उद्वेलन्नरुण्डखण्डनिकराकीर्णस्य, संख्योदधे-
र्द्वैधास्तम्भितपत्तिपङ्क्तिविकटः पन्थाः पुरस्तादभूत् ॥४०॥

---

(घ) अहो! गुणानुरागी नरेन्द्रस्य यदिदानीं सौधशिखरीत्तीर्णप्रतीहार-विनयोपन्यासप्रतिशमितविरोधसङ्कटोपनीते माधवमकरन्दमुखचन्द्रे वारंवारं सञ्चारितस्निग्धलोचनः कलहंसकादभिजनं ज्ञात्वा निर्वर्त्तितसहार्धवहुमानः प्रस्फुरन्मत्सरवैलक्षसीमलिनितमुखे भूरिवसुनन्दने मधुरवचनोपन्यासेन किमिदानीं युवयोर्भुवनाभोगभूषणाभ्यां महानुभावाभ्यामभिजनदर्शनगुणाभिरामाभ्यां नवचन्द्र-दर्शनरमणीयाभ्यां जामातृभ्यां परितोष इति प्रतिबोध्य, गतोऽभ्यन्तरं राजा एतावपि माधवमकरन्दावगच्छतः। अहमपि इमं वृत्तान्तं भगवत्यै निवेदयामीति।

---

तदुपन्यासः कृत इत्यर्थः। अभिजनो वंशः। बहुमानः सम्मानः। तावानीय दृष्टा तयोः सापराधयोरपि गुणानुरागादतिगौरवमेव राज्ञा कृतमिति भावः।

(३९) प्रेयसः प्रीतस्य मकरन्दस्येत्यर्थः। निर्व्याजं वास्तवम्। ऊर्जितं वलवत्।

(४०) दोरित्यादि। प्रेयसो युद्धार्णवस्य पन्था अग्र एवमभूत्। द्वैधा पार्श्वद्वये स्तम्भितया पत्तिपङ्क्त्या भयङ्करः। प्रेयसः कीदृशस्य। बाहुसंचूर्ण-नर्वाटतसन्धिस्फुटत्कङ्कालं यथा तथा प्रथमं वीरान् उन्मथ्नतोऽभिभवतः। इतरत्र

माध । ननु अनुपश्यस्थानमेतत् । पश्य

अद्यैवेन्दुमयूखखण्डखचितं पीतं निशीथोत्सवे
यैर्लीलापरिरम्भदायिदयितागण्डूषशेषं मधु ।
सम्प्रत्येव भवद्भुजार्गलगुरुव्यापारभग्नास्थिभि-
र्गात्रैस्ते कथयन्त्यसारविधुरान् प्रायेण संसारिणः ॥४१॥

स्मर्त्तव्यन्तु सौजन्यमस्य नरपतेः यत् अपराधिनोरपि अनपराद्धयोरिव नौ कृतप्रसादमधिष्ठितवान् । तदेहि मालतीसमक्षमधुना मदयन्तिकायाः हरणवृत्तान्तं विस्तरतः कथ्यमानं श्रोतुमिच्छामि । अन्यच्च ।

कथयति त्वयि सस्मितमालतीचलितलोलकटाक्षपराहतम् ।
वदनपङ्कजमुल्लसितत्रपास्तिमितदृष्टि सखी नमयिष्यति ॥४२॥

[इति परिक्रामतः ।] अयमसौ उद्यानवाटः ।

प्रविशतः ।

माध । कथं शून्या एव प्रदेशाः ।

---

त्वदीयायुधानि गृहीत्वा पराक्रमं कुर्वतः । इदं विशेषणद्वयं योग्यतया प्रेयस इत्यस्य । संख्योदधेः कीदृशस्य । स्फुरन्नरमुण्डखण्डसमूहव्याप्तस्य ।

(४१) अद्येत्यादि । अद्यैव यैः निशीथोत्सवे रात्र्युत्सवे इन्दुमयूखखण्डखचितं चन्द्रकिरणखण्डखचितं लीलापरिरम्भदायिदयितागण्डूषशेषं क्रीड़ालिङ्गनदातृवनितागण्डूषावशिष्टं मधु मद्यं पीतम् ते पुरुषाः सम्प्रति एव भवद्भुजार्गलगुरुव्यापारभग्नास्थिभिः त्वदीयभुजार्गलप्रबलताड़नात्रुटितास्थिभिः गात्रैः शरीरैः संसारिणः लोकान् प्रायेण बाहुल्येन असारविकलान् तुच्छविधुरान् कथयन्ति । तथा च । चणदृष्टनष्टमुग्धचेष्टिताः प्राक्तनकर्मायत्ता जना इति भावः ।

(४२) कथयतीत्यादि । त्वयि कथयति सति वदनपद्मं मालत्या एव सखी मदयन्तिका नमयिष्यति । कीदृशम् । सहासमालतीचञ्चलपक्ष्मकटाक्षैः पराहतम् । उद्गतलज्जानिश्चलदृष्टि च । मदयन्तिकानिमित्तयुद्धश्रवणेन मालत्या हासः ।

मक। वयस्य! नूनमस्मद्व्यतिरेकोद्वेगपर्य्याकुलत्वात् इतस्ततः परिभ्रमन्तौ आत्मानमत्रैवोद्यानगहने विनोदयन्तौ, भविष्यति तदेहि पश्यावः ।

उभौ परिक्रामतः ।

लव। सहि मदअन्तिए! मालदि । [सहसावलोक्य।] दिट्ठिआ पुणोवि एदे महाणुभाआ दीसन्ति (स)। (४३)

मकरन्दमाधवौ। भवत्यौ! क्व सा मालदी ?।

उभे। कुदो मालदी, पदसद्देण, अह्मे विप्पलद्धाओ मन्दभाइणीओ (ह)।

माध। कथं कथमपि, विध्वंसते मे हृदयं, अतः स्पष्टमभिधीयताम्। (४४)

मम हि कुवलयाक्षीं प्रत्यनिष्टैकबुद्धे-
र्द्रवति हृदयमन्तस्त्रस्यतीवान्तरात्मा ।
स्फुरति हि खलु चक्षुः स्पष्टमेतच्च वामम्,
वचनमिह भवत्योः सर्वथा हा हतोऽस्मि ॥ ४५ ॥

---

(स) सखि मदयन्तिके! मालती। दिष्ट्या पुनरपि एतौ महानुभावौ दृश्येते ।
(ह) कुतो मालती, पदशब्देन वयं विप्रलब्धा मन्दभागिन्यः ।

---

(४३) अत्रानेनावाभ्यां समर्थिता मालती आगता । अधुना तु युवयोरवलोकनेन आवां वञ्चिते इत्यर्थः ।

(४४) कथमिति वाते । कथमप्यनिर्वचनीयेन रूपेण ध्वंसते । स्थितिं न बध्नाति ।

(४५) ममेति । कुवलयाक्षीं पङ्कजाक्षीं प्रति अनिष्टैकबुद्धेः अनिष्टमात्रमाशङ्किनो मे मम अन्तर्हृदयमन्तःकरणं द्रवति । अन्तरात्मा परमात्मा त्रस्यतीवेत्युत्प्रेक्षा । एतद्वामं चक्षुर्नेत्रञ्च स्फुरति हि खलु स्पन्दते च इष्टात विषये

मद। तदोक्खु इदो निग्गदे महाणुभावे, अवलोइदं बुद्धरक्खिदं भअवदीए सआसं पेसिअ, अप्पमत्तनिमित्तं अज्ज-उत्तं विसबेहित्ति लवङ्गिआ अणुप्पेसिदा, तदो उत्तम्ममाणाए ताए मग्गं अवलोइदुं अग्गदो परिट्ठिदा, पच्छादे अहं णअ तं पेक्खामि, तदो अह्मेहिं एत्थ विहरन्तीए हिं विडबन्तराणि जाव विचिदाणि ताव तुह्मे दिट्ठेत्ति (च)। (४६)

माध। हा प्रिये मालति!।

किमपि किमपि शङ्के मङ्गलेभ्यो यदन्यद्
विरमतु परिहासश्चण्डि! पर्य्युत्सुकोऽस्मि।
कलयसि कलितोऽहं वल्लभे! देहि वाचम्,
भ्रमति हृदयमन्तर्विह्वलं, निर्दयासि॥४७॥

---

(च) तदा खलु इतो निर्गते महानुभावे बुद्धरक्षितामवलोकिताञ्च उभे भगवतीसकाशं विसृज्य, अप्रमत्तनिमित्तं विज्ञापय आर्य्यपुत्रमिति लवङ्गिका-मनुप्रेष्य उत्ताम्यमानायास्तस्या मार्गमवलोकयितुमग्रतः प्रस्थिता, पश्चादहं न च तां पश्यामि, तत आवाभ्यामिह विहरन्तीभ्यां यावद्विटपान्तराणि विचितानि तावद्युवां दृष्टाविति।

---

भवत्योः वामं प्रतिकूलं वचनञ्च स्पष्टं यथा तथा अनिष्टं सूचयति इति शेषः। एतेन सर्वथा हतोऽस्मि हा खेदे एतत् सर्वमनिष्टकरमित्यर्थः।

(४६) अत्र पश्चादावां प्रस्थिते इत्यन्वयः। विचितानि अन्विष्टानि।

(४७) किमपीत्यादि। मङ्गलेभ्योऽन्यदनिष्टं किमपि अनिर्वचनीयं यद्यस्मात्परि-हासादहं शङ्के स परिहासो विरमतु। परिहासेन तव निह्नवेऽनिष्टं शङ्केऽतस्त्वं सुखेति भावः। हे चण्डि! कोपने! समुत्सुकोऽस्मि यतः। तथा च कोपे-नापि निह्नवं मा कुर्वित्याशयः। अथ मामनेन प्रकारेण कलयसि जिज्ञाससे तर्हि कलितो ज्ञातोऽहम्। हे वल्लभे! वाचं देहि। त्वमेव मे वल्लभा। अतो

उभे। हा पिअसहि! कहिं गदासि। (क)

मक। किमित्यविज्ञाय वयस्य! वैक्लव्यमवलम्ब्यते। (४८)

माध। सखे! किं त्वमपि न जानासि माधवस्नेहदुःखितायास्तस्याः कातर्य्यचेष्टितानि। (४९)

मक। अस्त्येतत्, किन्तु भगवतीपादमूलगमनमप्याशङ्कते, तदेहि तत्र, तावत्पश्यावः।

उभे। एवम्पि सम्भावीअदि। (ख)

माध। एवं नाम भवतु। [सर्वे परिक्रामन्ति।]

मक। विचिन्त्य आत्मगतम्।

याता भवेद्भगवतीभवनं सखी नो
जीवन्त्यथैष्यति, न वेत्यभिशङ्कितोऽस्मि।
प्रायेण बान्धवसुहृत्प्रियसङ्गमादि,
सौदामिनीस्फुरणचञ्चलमेव सौख्यम् ॥५०॥

इति निष्क्रान्ताः सर्वे।

इति मालतीमाधवे अष्टमोऽङ्कः।

---

(क) हा प्रियसखि! क्वासि।

(ख) एवमपि सम्भाव्यते।

---

वदेत्यर्थः। विह्वलमधीरं सम्भ्रम चित्तमन्तर्भ्रमति स्थितिं न लभते। अत एव सोपालम्भमाह निर्दयासि निष्करुणासि।

(४८) वैक्लव्यं दुःखित्वम्।

(४९) कातर्य्यं कातरत्वं तेन चेष्टितानि प्राणत्यागादीनि।

(५०) यातेत्यादि। सखी मालती भगवतीगृहं नो याता गता भवेत् यदि याता भवेत् तदा जीवन्ती समागमिष्यति। न वा जीवन्ती यदि तदा नागमिष्यति इति अभिशङ्कितोऽस्मि आशङ्कितोऽस्मि। तत्र हेतुः बन्धुजनमित्रप्रियाणां सङ्गम आदौ यस्य तत् सौख्यं प्रायेण बाहुल्येन सौदामिनीस्फुरणचञ्चलं विद्युत्स्फुरणवत् चञ्चलमेव भवति।

# नवमोऽङ्कः ।

—:०:—

तत: प्रविशति सौदामिनी ।

सौदा । एषास्मि सौदामिनी, भगवत: श्रीपर्वतादुत्पत्य पद्मावतीमुपाश्रिता मालतीविरहिण: संस्तुतप्रदेशदर्शनासहिष्णो: स्थानं परित्यज्य, सह सुहृद्वर्गेण बृहद्द्रोणीशैलकान्तारप्रदेशं परिभ्रमतो माधवस्याधुनान्तिकमुपयामीति । भोस्तथाहमुत्पतिता यथा सकल एष गिरिनगरग्रामसरिदरण्यव्यतिकरश्चक्षुषा परिक्षिप्यते (१) । [पश्चाद्विलोक्य । ] साधु, साधु ।

पद्मावती विमलवारिविशालसिन्धु-
पारासरित्परिकरच्छलतो बिभर्त्ति ।
उत्तुङ्गसौधसुरमन्दिरगोपुराट्ट-
संघट्टपाटितविमुक्तमिवान्तरीक्षम् ॥२॥

---

(१) अधुना पूर्वसूचितसौदामिन्या मालतीजीवननिवेदनेन माधवप्रत्युज्जीवनाय प्रवेशमाह । तत इति । नानासिद्धिस्थानत्वेन देवतात्मकतया भगवत्पदं श्रीपर्वते । संस्तुत: परिचित: । द्रोणी नद्या मध्यम् । तथेत्यनेनोत्पतनस्य दूरत्वमुक्तम् । व्यतिकर: समूह: । परिक्षिप्यत इव नेत्रमण्डले प्रविष्टीक्रियत इव ।

(२) पद्मावतीति पद्मावती नगरीभेद:, विमलानि वारीणि यस्या: सा, तथा विशाला महती च या सिन्धुर्नदी । सिन्धुर्ना सरिति स्त्रियामित्यमर: । तथा पारासरित् नदीविशेष: तयो: परिकरच्छलत उपकरणव्याजेनेत्यपह्नवभेद: । उत्तुङ्गानामत्युच्चानां सौधानां प्रसादानां सुरमन्दिराणां देवमन्दिराणां गोपुराणां पुरद्वाराणाम् अट्टानाम् अट्टालिकानां सङ्घट्टेन परस्परविमर्द्देन पाटितविमुक्तमादौ पाटितं पश्चाद्विमुक्तं त्यक्तं स्नातानुलिप्तवत्पूर्वकालेत्यादिना कर्म्मधारय: । अन्तरीक्षमाकाशं

अपिच। सैषा विभाति लवणा ललितोर्मिपङ्क्ति-
रभ्रागमे जनपदप्रमदाय यस्याः।
गोगर्भिणीप्रियनवोत्पलमालभारि-
सेव्योपकण्ठविपिनावलयो विभान्ति ॥३॥

[अन्यतोऽवलोक्य।] अयमसौ भगवत्याः सिन्धोर्दारित-रसातलतटप्रपातः। (४)

यत्रत्य एष तुमुलो ध्वनिरम्बुगर्भ-
गम्भीरनूतनघनस्तनितप्रचण्डः।
पर्य्यन्तभूधरनिकुञ्जविजृम्भमाण-
हेरम्बकण्ठरसितप्रतिमानमेति ॥५॥

एताश्चन्दनाश्वकर्णसरलपाटलप्रायतरुगहनाः परिणत-

---

कर्म्म विभर्त्ति धारयति। अत्र सुरमन्दिराणामुत्पाटनाद्यभावेऽपि तत् सम्बन्धकल्प-नयातिशयोक्तिः। इति अलङ्कारद्वयस्य सजातीयसङ्करः।

(३) सैषेति। ललिताः सुन्दरा ऊर्म्मिपङ्क्तयो यत्र सैषा दृश्यमानेत्यर्थः। लवणा नाम नदी विभाति परिशोभते। अभ्रागमे मेघोदये सति जनपदप्रमदाय देशसन्तोषाय यस्या लवणाया गर्भिणी गौरिति गौ गर्भिणी तस्याः प्रिया नवा या उत्पलमाला तृणविशेषराजिः तां बिभर्त्ति अतएव सेव्याः भक्षणकारिणां सुखदाः उपकण्ठविपिनावलयः समीपस्थवनपंक्तयः विभान्ति शोभन्ते।

(४) रसातलतटः पृथ्वीतटः। तलशब्दः स्वरूपे। प्रपातोऽतटम्। यद्वा। तटे प्रपातोऽतिशयितं पतनम्।

(५) यत्रत्य इति। अम्बूनि गर्भे यस्य स अतएव गम्भीरो यो नूतनघनो जलभरितजलद इत्यर्थः। तस्य स्तनितं गर्जितं तदिव प्रचण्डः सङ्कटः एष यत्रत्यः तटनिष्ठ इत्यर्थः। तुमुलः शीतमाधी ध्वनिः निनादः, पर्य्यन्ते सीमनि यानि भूधरनिकुञ्जानि शैलस्थलताद्याच्छादितवनभागास्तेषु विजृम्भमाणस्य उल्ल-सतः हेरम्बकण्ठरसितस्य गणेशगलध्वनेः प्रतिमानं सादृश्यमेति इतीत्युत्प्रेक्षा।

मालूरसुरभयोऽरण्यगिरिभूमयः स्मारयन्ति खलु तरुणकदम्ब-जम्बूवनावनद्धान्धकारगुरुनिकुञ्जगभीरगह्वरोद्गारगोदावरीरव-मुखरितविशालमेखलाभुवो दक्षिणारण्यभूधरान्, अयञ्च मधु-मतीसिन्धुसम्भेदपावनो भगवान् भवानीपतिः अपौरुषेयप्रतिष्ठः सुवर्णविन्दुः इत्याख्यायते (६)। प्रणम्य।

जय देव भुवनभावन ! जय भगवन्नखिलनिगमनिधे ! ।
जय रुचिरचन्द्रशेखर ! जय मदनान्तक ! जय जगदादिगुरो !
॥ ७ ॥

गमनमभिनीय।

अयमभिनवमेघश्यामलोत्तुङ्गसानु-
र्मदमुखरमयूरीमुक्तसंसक्तकेकः।

---

(६) चन्दनं रक्तचन्दनं देवदारुर्वा उपचारात्। अन्यथास्य मलयजत्व-विरोधात्। अश्वकर्णो वृक्षभेदः। प्रायःशब्दः प्रभृत्यर्थो बाहुल्यार्थो वा। परिणतं पक्कम्। मालूरं विल्वफलम्। तरुणी वृक्षभेदः। अवनद्धो वृतः। उद्गारः प्रतिशब्दः। गोदावरी नदीभेदः। मेखला नितम्बः। भूधरान् मलयादीन्। सौदामिन्या दक्षिणदेशवासित्वेन स्मरणम्। मधुमतीसिन्धोर्नद्योः सम्भेदः सङ्गम-स्तस्य पावनः पावित्र्यहेतुः। स्वयम्भूसन्निधानस्य महातीर्थहेतुत्वात्। अपरि-मिता अज्ञाता पुरुषकृता प्रतिष्ठा स्थितिर्यस्य। एतेन स्वयम्भूत्वमुक्तम्। आख्यानं प्रसिद्धिः।

(७) अदृष्टार्थं शिवनुतिमाह। जयेति। भुवनानां कार्य्यजातानां भावन उत्पादक। दीव्यतीति देव द्युतियुक्त। भगवन् भगं तत्त्वज्ञानं तद्युक्त। तथा च रागद्वेषादिरहित इत्यर्थः। स्तुतिफलमाह। अखिलवरान् भुक्तिमुक्त्या-दीन् ददाति तादृशो निगमो वेदस्तन्निधे तत्कर्त्तः। यद्वा। निगम आविर्भाव-स्तदाश्रय। तथा च। वेदद्वाराविर्भावेन जगदुपकारक इत्यर्थः। मनोज्ञ-चन्द्रभूषण। तथा च वेदकारणाय कृतशरीरपरिग्रह इत्यर्थः। तर्हि पौरुषेय-त्वाद्वेदाप्रामाण्यं स्यादित्यत आह। मदनेति। सर्वदोषनिधेः कामस्य नाशन निर्दोष। अत एव भगवान्। तथा च नोक्तदोषः। आदौ सर्गादौ गुरो। ब्रह्मादीनामित्यर्थात्। तथा च वेदस्य भगवत्कर्तृत्वमायाति।

शकुनिशवलनीडानोकहस्निग्धवर्ष्मा,
वितरति बृहदश्मा पर्वतः प्रीतिमच्णोः ॥८॥

अपिच। दधति कुहरभाजां सत्तभल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि।
शिशिरकटुकषायः स्त्यायते शल्लकीना-
मिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः ॥९॥

[ऊर्ध्वमवलोक्य।] कथं मध्याह्नः, तथाहि अत्र सम्प्रति
काश्मर्य्याः कृतमालमुद्गतदलं कोयष्टिकष्टीकते,
तीराश्मन्तकशिखिचुम्बितमुखा धावन्त्यपः पूर्णिकाः।

---

(८) अयमित्यादि। अयं पर्वतः गिरिः अक्ष्णोर्नेत्रयोर्हर्षं वितरति ददाति। कीदृशः। नवीननिघशामतुङ्गसानुः। हर्षप्रीतमयूरस्वीकृता संसक्ता मिलिता केका मयूरवाणी यत्र सः। शकुनिभिः पक्षिभिः शवला कर्वुरा ये नीड़ानोकहाः पक्षिवासवृक्षास्तैः स्निग्धं वर्ष्म शरीरं यस्य सः। तरुणां पक्षिव्याप्तत्वेनाशेषपक्षिणो नीड एव वसन्तीति भावः। बृहदश्मा विपुलशिलः। केका वाणी मयूरस्येत्यमरः। शवलैताश्च कर्वुर इति च। कुलायो नीड़मस्त्रियामिति च। अनोकहः कुटः शाल इति च। शरीरं वर्ष्म विग्रह इति च।

(९) दधतीत्यादि। अत्र गिरौ कुहरभाजां गुहावासिनां तरुणभल्लूकाना-मम्बूकृतानि सष्ठीवकघूत्कारध्वनयोऽनुरसितेन प्रतिरवेण गुरूणि स्थूलानि स्त्यानं घनतां दधति। शल्लकीनां वृक्षभेदानां गजखण्डितविकीर्णसन्धिपर्वनिर्गतगन्धः स्त्यायते निविड़ीभवति। निष्यन्दः स्पर्शाच्छिशिरः शीतो रसतः कटुः कषायः। स्त्यानमिति भावप्रधानो निर्देशः। अम्बूकृतं सनिष्ठीवमित्यमरः।

(१०) काश्मर्य्या इत्यादि। काश्मर्य्याः गम्भार्य्याः सकाशात् कृतमालमारग्वधवृक्षम् उद्गतदलं उद्गतपत्रम्। घनच्छायमिति यावत्। कोयष्टिकः कोवा इति ख्यातः पक्षी टीकते गच्छति। गम्भार्य्या अल्पपत्रत्वात्। यद्वा। कृता सम्पन्ना माला वृक्षपङ्क्तिर्यत्र तं प्रदेशं गच्छतीत्यर्थः। तीरस्थोऽश्मन्तकस्तीराश्मन्तकः। शाकपार्थिवादिः। अश्मन्तकोऽम्लकोला इति ख्यात आमातकी वा वीरणं वा। तस्य शिखिः शिखा लताभेदो वा तस्याः चुम्बितं चुम्बनकरणं मुखं यासां तादृशाः

दात्यूहैस्तिनिशस्य कोटरवति स्कन्धे निलीय स्थितम्,
वीरुन्नीडकपोतकूजितमनुक्रन्दन्त्यधः कुक्कुभाः ॥१०॥
तद्भवतु माधवमकरन्दावन्विष्य, यथाप्रस्तुतं सान्त्वयामि।

इति निष्क्रान्ता विष्कम्भकः।

ततः प्रविशति माधवो मकरन्दश्च।

मक। सकरुणं निश्वस्य।

न यत्र प्रत्याशामनुपतति नो वा रहयति,
प्रविच्छिन्नं चेतः प्रविशति च मोहान्धतमसम्।

---

पूर्णिका पक्षजातयोऽपः पानीयानि धावन्ति गच्छन्ति। ग्रीष्मतप्तास्ता नीड़ं विहाय जलमनुगच्छन्तीत्यर्थः। यद्वा। तीराश्मन्तकं तीरवर्तिवीरणमपःपूर्णिका कुम्भीरमक्षिका धावन्ति व्रजन्ति। ग्रीष्मतप्तजलं त्यक्त्वा तीरवीरणादिच्छाया-मनुसरन्तीत्यर्थः। यद्वा। अश्मन्तकं शिंशिपावृक्षस्तस्य शिम्बिरग्रमित्यर्थः। तिनिशस्यातिमुक्ताख्यवृक्षस्य छिद्रवति स्कन्धे प्रकाण्डे छायासेवनार्थं दात्यूहैः पक्षिभेदैः कोण्डाडाक इति ख्यातैर्निलीय स्थितम्। वीरुल्लता नीड़ं वासो यस्य कपोतस्य पाण्डुनामपक्षिणः शब्दितं लक्षीकृत्य कुक्कुभा अधस्तरूणां रुदन्ति। ग्रीष्मतापात् कपोता निजनीड़वासिनः कुक्कुभाश्च तृषार्त्ता रुदन्तीत्यर्थः। जाति-स्वभाव एवासौ। यद्वा। कुक्कुभाः क्रन्दन्त्याह्लादयन्ति। अहो कपोतरुत-मित्यभिलपन्तीत्यर्थः। गम्भारी सर्वतोभद्रा काश्मरी मधुपर्णिकेत्यमरः। आर-ग्वधे राजवृक्षशम्याकचतुरङ्गुलाः। आरेवतव्याधिघातकृतमालसुवर्णका इति च। कीयष्टिकष्टिट्टिभक इत्यपि। आम्रातकेऽश्मिकायामश्मन्तको वीर-णेऽपि च। शिंशिपाश्मन्तकं प्राहुरिति धरणिः। शिम्बिः शिखा लताभेद इति विश्वः। नासाच्छिन्न्यां तु पूर्णिकेति च। पूर्णिका पल्लीति ख्याता पत-ङ्गिकेति ख्याता वा। अपःपूर्णिका कुम्भीरमक्षिकेत्यपि धरणिः। दात्यूहः काल-कण्टक इत्यमरः। तिनिशे स्यन्दनो नेमी रथद्रुरतिमुक्तक इति च। अस्त्री प्रकाण्डः स्कन्धः स्यादिति च। तित्तिरिः कुक्कुभो लाव इति च। मयूरप्रमा-णोऽयं पक्षी।

(११) नेति। यत्र विपदि आशां नानुपतति नानुगच्छति, नोवा रहयति निवारयति आशामित्यर्थः। आशायाश्चिरावस्थायित्वात्। प्रविच्छिन्नं परिमथितं

अकिञ्चित्कुर्वाणाः पशव इव तस्या वयमहो
विधातुर्वामत्वाद्विपदि परिवर्त्तामह इमे ॥११॥

माध। हा प्रिये मालति! क्वासि, कथमविज्ञाततत्त्वम् अद्भुतं झटिति पर्य्यवसितासि, ननु अकरुणे! प्रसीद सम्भावय माम्।

प्रियमाधवे! किमसि मय्यवत्सला
ननु सोऽहमेव यमनन्दयत् पुरा।
अयमुदग्रहीतकमनीयकङ्कण-
स्तव मूर्त्तिमानिव महोत्सवः करः ॥१२॥

वयस्य मकरन्द! दुर्लभः पुनर्जगति तावतः स्नेहस्य सम्भवः।

सरसकुसुमश्यामैरङ्गैरनङ्गमहाज्वर-
श्चिरमविरतोन्माथी सोढः प्रतिक्षणदारुणः।
तृणमिव ततः प्राणान्मोक्तुं मनो विहितं तया,
किमपरमतो निर्व्यूढं यत्करार्पणसाहसम् ॥१३॥

---

चेतः चित्तं मोहान्धकारं मोहरूपं गाढान्धकारं प्रविशति च। तस्या अकिञ्चित् कुर्वाणा न किमप्युपकारकारका अतएव पशवस्तद्धर्माण इमे वयं विधातुः वामत्वात् प्रातिकूल्यात् परिवर्त्तामहे परिवर्त्तनशीला भवामः, अहो इत्याश्चर्य्यम्।

(१२) प्रियेति। प्रियो माधवो यस्या सा तस्याः सम्बुद्धिः हे माधवानुरक्ते! किं कथं मयि अवत्सला निर्दयासि भवसि एतदनौचित्यं ते इति भावः। ननु मालति! सोऽहमेव, न मम किमपि परिवर्त्तनं जातमित्यर्थः। उदग्रहीते न्यस्ते कमनीये कङ्कणे यत्र तादृशोऽयं तव मूर्त्तिमान् शरीरी महोत्सवः आनन्द-पराकाष्ठेव अयं करः पुरा प्रथमं यमनन्दयत् सन्तोषयामास।

(१३) सरसेति। सरसैः कुसुमैरिव श्यामैः कृशैः कोमलैरित्यर्थः अङ्गैः अवि-रतोन्माथी नियतदाहकः अतएव प्रतिक्षणदारुणः असाध्यरूप इत्यर्थः। अनङ्ग-महाज्वरः कामरोगश्चिरं सोढः। ततः तादृशसहनान्तरं प्राणान् तृणमिव मोक्तुं

अपिच। मयि विगलितप्रत्याशत्वाद्विवाहविधेः पुरा,
विकलकरणैर्मर्मच्छेदव्यथाविधुरैरिव।
स्मरसि रुदितैः सेहाकूतं तथा व्यतनोदसा-
वहमपि यथाभूवं पीडातरङ्गितमानसः ॥१४॥

[सावेगम्।] अहो नु खलु भोः !

दलति हृदयं गाढोद्वेगं द्विधा तु न भिद्यते,
वहति विकलः कायो मोहं न मुञ्चति चेतनाम्।

---

त्यक्तुं तथा मनो विधृतम् अवधारितम् अतोऽपरमन्यत् किं विद्यते यत् करार्पण-साहसं निर्व्यूढं प्रकटीकृतं भवतीत्यर्थः।

(१४) मयीत्यादि। सखे असौ प्रिया स्नेहेङ्गितं रुदितैस्तथा विस्तारयामास यथा पीड़ाचपलचित्तोऽहमप्यभूवं भूतोऽस्मीति स्मरसि। इतिरध्याहार्य्यः। अन्यथा कर्माप्राप्तिः। रुदितस्य करुणजन्यत्वात् करुणहेतुमाह। विवाहविधेः पूर्वं मयि नैराश्याद्विकलानि स्वविषयव्याहतानि करणानि इन्द्रियाणि तैः लक्षिता। अनेन मोह उक्तः। लक्षणे तृतीया। कीदृशैः। मर्मच्छेदव्यथादीनैरिव। अनेन निःश्वासवत्त्वमुक्तम्। निःश्वासेन मर्मच्छेदोन्नयनात्। तथा च निःश्वास-रुदितमोहैः करुणरस उक्तः। यद्वा। विकलकरणैर्व्यतनोद्रुदितैरिव। इतरत्समम्।

(१५) दलतीत्यादि। मम हृदयं दलति विदीर्य्यते। सवेदनत्वात्। गाढ़ोद्वेगं दृढ़ोद्वेगम् नैव द्विधा भिद्यते द्विधा भिन्नं न भवति। स्फुटिते पीड़ोपशान्तिरिति भावः। तुशब्द एवार्थे पुनरर्थे वा। पुनर्न भिद्यते इत्यर्थात्। भिद्यत इति कर्मकर्त्तरि तङ्। अथ च दलति तन्न भिद्यत इति विरोधाभासः। एव-मुत्तरत्रापि। विह्वलः कायो मोहं दधाति न तु चेतनां त्यजति। पुनश्चेतन्य-योगात्। स्थिरे मोहे दुःखाज्ञानात् कृतार्थः स्यामिति भावः। तदिह आध्यात्मिकविपद्द्वयमुक्तम्। अन्तर्दाहः शरीरं दीपयति न भस्मसात् करोति। कार्त्स्न्येन भस्मरूपं न करोतीत्यर्थः सातिः कार्त्स्न्ये। तथात्वे दुःखाज्ञानमेव स्यादित्याशयः। अनेनाधिभौतिकी विपदुक्ता। तदिह व्याधिदशायां मोहा-

ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्,
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥१५॥

मक। वयस्य माधव! निरवग्रहं दहति दैवमिव दारुणो विवस्वान्, इयञ्च ते शरीरावस्था, तत् अस्य पद्मसरसः, परिसरे मुहूर्त्तमास्यताम्। अत्र हि

उन्नालबालकमलाकरमाकरन्द-
निष्यन्दसञ्चलनमांसलगन्धबन्धुः।
त्वां प्रीणयिष्यति पुरःपरिवर्त्तमान-
कल्लोलशीकरतुषारजडः समीरः ॥१६॥

इति परिक्रम्योपविशतः।

मक। [स्वगतम्।] भवतु एवं तावत् अन्यतः प्रक्षिपामि। [प्रकाशम्।] वयस्य माधव!।

एतस्मिन्मदकलमल्लिकाख्यपक्ष-
व्याधूतस्फुरदुरुदण्डपुण्डरीकाः।

---

दय उक्ताः। यदाह। मनःसम्मोहसर्वाङ्गदाहवत्त्वादिभिस्तथा। शिरसो वेदनाभिश्च व्याधेरभिनयो भवेत्। इति। इह कायावच्छिन्न आत्मा कायपदेनोक्तः। अन्यथा मोहस्य आत्मधर्मतया कायेऽसम्भव इत्यवधेयम्। स्त्रिया मूर्त्तिस्तनुस्तनूरित्यमरः।

(१६) उपवेशनफलमाह। उन्नालेत्यादि। समीरो वायुरिह त्वां प्रीणयिष्यति प्रीतिं करिष्यति। तद्योग्यतामाह। ग्रीष्मान्तेऽल्पोदकतया उद्गतनाला बाला ये पद्मसङ्घास्तेषां माकरन्दनिष्यन्देन पुष्परसीयक्षरणेन यत् संवलनं मिश्रणं तेन मांसलः पुष्टो यो गन्धः तस्य बन्धुः मित्रम्। अयं दोलायमानकल्लोलशीकरैः शीतलो जड़ो मन्दः। यद्वा। शीकर एव तुषारस्तैर्जड़ः शीत इत्यर्थात्। आकरो निवहोत्पत्तिस्थानश्रेष्ठेषु कथ्यत इति मेदिनीकारः। माकरन्दः तस्येदमित्यण्।

(१७) एतस्मिन्नित्यादि। अत्र सरसि शोभायुक्ता भुवः प्रदेशा दृश्यन्ताम्।

वाष्पाम्भःपरिपतनोद्गमान्तराले
दृश्यन्तामविरहितश्रियो विभागाः ॥१७॥

माधवः सोद्वेगमुत्तिष्ठति।

मक। कथं प्रतिपत्तिशून्यमुत्थाय अन्यतः प्रवृत्तः (१८)। [निःश्वस्योत्थाय च।] सखे! प्रसीद। पश्य

वानीरप्रसवैर्निकुञ्जसरितामासक्तवासं पयः,
पर्य्यन्तेषु च यूथिकासुमनसामुज्जृम्भितं जालकैः।
उन्मीलत्कुटजप्रहासिषु गिरेरालम्ब्य सानूनिह,
प्राग्भारेषु शिखण्डिताण्डवविधौ मेघैर्वितानाय्यते ॥१९॥

---

अश्रुपूर्णनेत्रतया दर्शनमाशङ्क्याह। एकस्य नेत्रजलस्य परिपतनमन्यस्योत्थानं तयोर्मध्ये। प्रदेशाः कीदृशाः। दर्पाव्यक्तमधुररवहंसविशेषपक्षकम्पितचलद्दीर्घनालपद्माः।

(१८) प्रतिवाक्यप्रदानादिमुख्यालोकनवर्जनम्। तूष्णीम्भावो विचेतस्त्वं जड़तायां भवन्ति हि। इति जड़ताचिह्नं माधवे दृष्ट्वा सचमत्कारमाह। कथमिति। निरूप्य नेयं जड़ता किं त्वनुस्मृतिरित्याह शून्यमिति। शून्यं निर्लक्ष्यमन्यतो गमनेनानुस्मृतिः। यद्वा। अन्यतः शून्यं मालतीव्यतिरिक्तवस्त्वज्ञानात्। अत एव प्रवेशादन्यकार्य्याणां कथितानुस्मृतिरिति। अप्रतिपत्तिशून्यमिति पाठेऽनवधानेन चैतन्यविरही यथा तथा उत्थायेत्यर्थः।

(१९) वानीरेत्यादि। सखे! कुञ्जसम्बन्धि नदीनां पयः पश्य। वेतसपुष्पैर्लब्धसौरभम्। तासामेवोपान्तेषु च यूथिकाकुसुमानां जालकैः कोरकैः विकासितम्। यद्वा। यूथिकाश्च सुमनसश्च तासां जालकैः। यूथिका जूहीति प्रसिद्धा। सुमनसो जात्यः। सुमना मालती जातिरित्यमरः। तथा गिरेः सानूनेकदेशानालम्ब्येह प्राग्भारेषु शिखरेषु वर्त्तमानैर्मेघैर्वितानाय्यते। वितानाचारः क्रियते। मयूरनृत्यविधाननिमित्तम्। निमित्तसप्तमीयम्। कीदृशेषु। विकसत्कुटजपुष्परूपहासवत्सु। तदिह मयूरनृत्यार्थं मेघैर्वितानं कुटजैर्हास इति यत्तत्पश्येत्यर्थः। एवं च कुटजश्चा द्रष्टारो मयूरा नर्तका मेघो वितानमिति नृत्यसामग्री। ध्वनिस्तु शिखण्डिपदेन पक्षचूड़ोपेतशिरस्क-

अपिच।

जृम्भाजर्जरडिम्बडम्बरघनश्रीमत्कदम्बद्रुमाः
शैलाभोगभुवो भवन्ति, ककुभः कादम्बिनीश्यामलाः।
उद्यत्कन्दलकान्तकेतकभृतः कच्छाः सरित्स्रोतसा-
माविर्भूतशिलीन्ध्रलोध्रकुसुमस्मेरा वनानां ततिः॥२०॥

माध। सखे! पश्यामि, किन्तु दुरालोकरमणीयाः सम्प्रति अरण्यभूमयः तत्किमेतत्। [सास्रम्।] अथवा किमन्यत्।

---

त्वेन विदूषक उक्तः। प्राग्भारपटेन च प्रावृतीति प्राक्प्रकृष्टज्ञानवान् भारो दुःसहो यस्य स मूर्खो द्रष्टोक्तः। तस्य च हास उचित एव। यद्वा। शिखण्डि-पटेन विशिखण्डयोगितया बाल उक्तः। तस्य च नृत्ये मूर्खो हसत्येव। बाला-नामपि कर्त्तव्यं त्रिशिखण्डविभूषणम्। इति बालानां शिखण्डित्वे मानम्। वानीरवञ्जुला इत्यमरः। चारकौ जालकं क्लीबे कलिका कोरकः पुमानिति च। वितानमाचरतीत्यर्थे काङन्तात्यकि वितानायत इति रूपम्।

(२०) जृम्भेत्यादि। सखि! शैलपर्य्यन्तभूमयो जृम्भया विकासेन जर्जरः पृथग्भूतौ यौ डिम्बौ गोलकस्तस्य डम्बरेणारम्भेण व्याप्ता अत एव श्रीमन्तो नीप-वृक्षा यत्र तादृश्यो भवन्तीति यत्तत्पदस्येत्यर्थः। एवं सर्वत्र दिशो मेघमालाश्यामा भवन्ति। यद्वा। कादम्बानां कलहंसानां स्त्रियः कादम्बिन्यस्ताभिः श्यामाः। नदीप्रवाहाणां कच्छाः कूलानि उद्यद्भिर्विकसितैः कन्दलैर्नवाङ्कुरैः कान्ता मनोज्ञा ये केतकवृक्षास्तद्धारका भवन्ति। यद्वा। उद्यन् कन्दलः कन्दो यस्य कान्तकेतकस्येत्यर्थः। यद्वा। उद्यन् यः कन्दली मल्लीवृक्षस्तं कान्तकेतकं च विभ्रतीत्यर्थः। वनानां ततिः माला आविर्भूतगन्धानि व्यक्तीभवत्सौरभाणि यानि शिलीन्ध्रलोध्रकुसुमानि तैः स्मेरा सहासेव। मनोज्ञा वा शिलीन्ध्रं कन्दलीपुष्पमिति विश्वः शिलीन्ध्रं मूलं ख्यातम्। वनमिह पद्मं जलं विपिनं वा। जृम्भा विकास-जृम्भयोरिति विश्वः। डिम्बोऽस्त्रोऽपि च गोलक इति धरणिः। डम्बरोऽस्त्री समारम्भ इति विश्वः। कादम्बिनी मेघमाला कादम्बस्त्री च कथ्यत इति शाश्वतः। कन्दलः कलहे कन्दे मल्लामङ्कुरसङ्गयोरिति मेदिनीकारः। पुंसि कच्छस्त्याविध इत्यमरः। वनं नीरेऽम्बुजे क्लीबं काननेऽप्यालये वनमिति मेदिनीकारः।

उत्फुल्लार्जुनसर्जवासितवहत्पौरस्त्यझञ्झानिल-
प्रेङ्खोलस्खलितेन्द्रनीलशकलस्निग्धाम्बुदश्रेणयः।
धारासिक्तवसुन्धरासुरभयः प्राप्तास्त एवाधुना
घर्माम्भोविगमागमव्यतिकरश्रीवाहिणो वासराः ॥२१॥

हा प्रिये मालति!।

तरुणतमालनीलबहुलोन्नमदम्बुधराः,
शिशिरसमीरणावधूतनूतनवारिकणाः।

---

(२१) उत्फुल्लेत्यादि। अधुना त एते दिवसाः प्राप्ता ये मनोराज्येन मया धृता इत्यर्थः। इह त एत इति सर्वनामभ्यां दिनानामत्युत्कण्ठाहेतुत्वं ध्वनितम्। कीदृशाः। उत्फुल्लाभ्यामर्जुनशालाभ्यां वासितः सुरभीकृतो वहन् पौरस्त्यः प्राच्यो यो झञ्झानिलः प्रचण्डवायुः प्रावृषेण्यवातो वा तस्य प्रेङ्खोल आन्दोलनं तेन स्खलिताः स्वस्थानच्युता इन्द्रनीलमणिखण्डा इव श्यामा मेघपङ्क्तयो येषु ते। अत्रार्जुनग्रहणेऽपि द्वितीयतरोः सर्जस्य ग्रहणं कदम्बाद्युपलक्षणार्थम्। तथा ग्रीष्मोष्मतप्तमहीसेकसौरभवन्तः। ईषद्वृष्टौ तदुद्गमात्। घर्मस्य ग्रीष्मस्य विगमोऽपगमोऽम्भस आगम आगमनं तयोर्व्यतिकरः सम्बन्धस्तेन श्रियं शोभां वोढुं शीलं येषां ते। यद्वा। घर्माम्भसः स्वेदजलस्य यौ विगमागमौ तयोर्व्यतिकरः सम्भेदः। वर्षारम्भ इत्यर्थः। तस्य श्रीः सम्पत्तिस्तद्वाहिन इत्यर्थः। पौरस्त्य इति पुरसस्त्यक्। झञ्झा ध्वनिविशेषे स्यादिति मेदिनीकारः। तदन्वितोऽनिलो झञ्झानिलः। यद्वा। झञ्झानिलः प्रावृषेण्य इति रत्नकोशः। अत्र वास्यमानेति कर्त्तव्ये संपूर्णक्रियत्वपरनिष्ठाप्रत्ययान्तवासितपदोपादानात् समस्तपुष्पसौरभसंक्रान्तिर्वायोर्ध्वनिता। अत एव मलयानिलात् झञ्झानिलोत्कर्षः कटाक्षितः। उन्मादावस्थो माधवः। उन्मादश्चेष्टवियोगात्। यदाह। इष्टजनस्य वियोगादुन्मादो विभवनाशाच्च।

(२२) तरुणेत्यादि। कथमधुना दिशोऽहमवलोकयेयम्। तरुणतमालानीलास्तद्वद्वा नीलाः प्रचुरा उन्नच्छन्तो मेघा यासु ताः। शीतवातक्षिप्तनवजलकणाः। हरेरिन्द्रस्य हेतिरस्त्रं धनुस्तद्वतीः। मदकलमयूरकोलाहलैः शब्दवतीः॥ कलहं कलकलेऽपि चेति विश्वः। सरित इति पाठे प्रतिबिम्बेन मेघ-

कथमवलोकयेयमधुना हरिहेतिमती-
र्मदकलनीलकण्ठकलहैर्मुखराः ककुभः ॥२२॥

शोकार्त्तिं नाटयति ।

मक। कोऽप्यतिदारुणो दशाविपाकः सम्प्रति वयस्यस्य ।
[सास्रम्।] मया पुनर्वज्रमयेन कोऽपि विनोद आरब्धः।
[निश्वस्य।] एवं पर्य्यवसितप्रायैव नो माधवं प्रति प्रत्याशा।
[सभयं विलोक्य।] कथं प्रमुग्ध एव ?। [आकाशे।] सखि
मालति ! किमपरं निरनुक्रोशासि। (२३)

अपहस्तितबान्धवे त्वया विहितं साहसमस्य तृष्णया ।
तदिहानपराधिनि प्रिये सखि ! कोऽयं करुणोज्झितक्रमः ॥२४॥

कथमद्यापि नोच्छ्वसिति, हन्त मुषितोऽस्मि दैवेन ।

मातर्मातर्दलति हृदयं, ध्वंसते देहबन्धः,
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि ।

---

वत्त्वम् । हरिः कृष्णस्य हेतिश्चक्रं तन्नामकपक्षियुक्ताः । दुःखितेनर्तुज्ञानं दुःखमयत्वेनैव । यदाह । ऋतून् पश्यति दुःखार्त्तः सर्वान् दुःखसमान्वितान् ॥ इति । तदनेन प्रबन्धेन वर्षाकाल उक्तः । यदाह । कदम्बनीपकुटजैः शाद्वलैः सेन्द्रगोपकैः । मेघवातैः सुखस्पर्शैः प्रावृट्कालं प्रदर्शयेत् ॥ शोकेति । मूर्च्छितः पततीति भावः ।

(२३) विनोदश्चित्तस्वास्थ्यम् । प्रमुग्धः संज्ञाशून्यः । अनुक्रोशोऽनुकम्पा तद्विपरीतासि ।

(२४) अपेत्यादि । अगणितमात्रादिके हे सखि ! अस्य लोभेन त्वया साहसं कृतम् । तदिह प्रिये प्रीते निरपराधेऽपि निर्दयः क्रमः कोऽयम् । कैयं परिपाटिस्तवेत्यर्थः । कथमीदृशं पतिं त्यक्त्वा निर्दयासीति भावः ।

(२५) मातरिति । मातर्मातरिति सम्भ्रमे द्विर्भावः । हृदयं दलति विदीर्यते, देहबन्धोऽवयवसंस्थानविशेषः ध्वंसते नश्यति । जगत् शून्यं मन्ये अविरतं

सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा,
विष्वङ्मोहः स्थगयति, कथं मन्दभाग्यः करोमि ॥२५॥

कष्टं भोः कष्टम् ।

बन्धुताहृदयकौमुदीमहो, मालतीनयनपूर्णचन्द्रमाः ।
सोऽयमद्य मकरन्दनन्दनो, जीवलोकतिलकः प्रलीयते ॥२६॥

हा वयस्य माधव !

गात्रेषु चन्दनरसो दृशि शारदेन्दु-
रानन्द एव हृदये, मम यस्त्वमासीः ।
तत्त्वां निकामकमनीयमकाण्ड एव
कालेन जीवितमिवोद्धरता हतोऽस्मि ॥२७॥

---

ज्वाला यस्मिन् कर्मणि तद्यथा तथा अन्तरन्तःकरणे ज्वलामि दग्धोऽस्मीत्यर्थः । सीदन्नवसादमापन्नोऽत एव विधुरो व्याकुलोऽन्तरात्मा अन्धे तमसि गाढान्धकारे मज्जतीवेत्युत्प्रेक्षा । विष्वक् समन्तात् मोहः स्थगयति निर्व्यापारं करोतीत्यर्थः मन्दभाग्यो हतभाग्योऽहं कथं किं करोमि तत्सङ्गमं विना न किमपि मे सुखम् ऐहिकं दृश्यते इत्यर्थः ।

(२६) बन्धुतेति । बन्धुतामयं यद्धृदयं तस्य कौमुदीमहः चन्द्रिकोत्सवः, मालतीनयनयोः पूर्णचन्द्रमाः पूर्णेन्दुः स इवाह्लादजनक इत्यर्थः । मकरन्दस्य नन्दनो मोदयिता जीवलोकस्य संसारस्य तिलकः भूषणस्वरूपोऽयं स माधवः अद्य प्रलीयते अदर्शनतां यातीत्यर्थः ।

(२७) गात्रेष्विति । हे माधव ! यस्त्वं मम गात्रेषु चन्दनरसः मलयजलेपः दृशि नयने शारदेन्दुः शारदशशधर इव आनन्दकः । हृदये आनन्द एव आसीः अभूः । तत् तस्मात् निकामकमनीयमतिसुन्दरं त्वां जीवितं मदीयचित्तमिव अकाण्डेऽकस्मात् उद्धरता हरता कालेन मृत्युना हतोऽस्मि, त्वां हरता कालेनाहमपि हत इत्यर्थः । अत्रैकस्य माधवस्य मकरन्ददेहे बहुविधचन्दनादिरूपसम्भावनया पर्य्यायालङ्कारभेदः लक्षणन्तूक्तम् ।

स्रग्धरा। [?]

अकरुण! वितर स्मितोज्ज्वलां दृशमतिदारुण! देहि मे गिरम्।
सहचरमनुरक्तचेतसं प्रियमकरन्दं, कथं न मन्यसे ॥ २८ ॥

माधवः संज्ञां लभते।

मक। [सोच्छ्वासम्।] अयमचिरधौतराजपट्टरुचिरमांसलच्छविर्नवजलधरः तोयशीकरासारेण मे वयस्यं जीवयति, दिष्ट्या जगदुच्छ्वसितं तावत्। (२९)

माध। तत्कथमत्र विपिने प्रियावार्त्ताहरं करोमि (३०)। [विलोक्य।] साधु, साधु।

फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलिततनुतरङ्गामुत्तरेण स्रवन्तीम्।
उपचितघनमाल-प्रौढ़तापिञ्छनीलः,
श्रयति शिखरमद्रेर्नूतनस्तोयवाहः ॥ ३१ ॥

---

(२८) सोन्मादो विलपति। अकरुणेत्यादि। हे अकरुण! निर्दय! स्मितोज्ज्वलां हासमनोज्ञां दृशं देहि। हासपूर्वं पश्येत्यर्थः। यद्वा। स्मितेन हास्यविकासेन उज्ज्वलां विकसितामित्यर्थः। वचनादानात् हे अतिदारुण! मे मह्यं गिरं वाचं देहि। प्रियमकरन्दं सहचरं मित्रम् अनुरक्तचेतसम् अनुरक्तचित्तं कथं न मन्यसे। कथं नाङ्गीकरोषि। दुःखावेगादीनां सत्त्वात् करुणो रसः। यदाह। दृष्टनाशधनापायबन्धुव्यसनताड़नैः। शापक्लेशोपघातैश्च जायते करुणो रसः। अश्रुनिश्वासवैवर्ण्यस्खलाङ्गैश्च भूलिचयैः। परिदेवितशोकाद्यैरभिनेयः स सूरिभिः।

(२९) अचिरधौतत्वेन राजपट्टस्य नीलत्वस्निग्धत्वे उक्ते। राजपट्टं मणिभेदः तद्वत् रुचिरा दीप्तिमती मांसला घना छविः कान्तिर्यस्य सः।

(३०) वार्त्ताहारी दूतः। अतिप्रवृद्धकालतया दूतप्रेषणम्।

(३१) फलेति। फलभराणां फलसमूहानां यः परिणामः परिपक्वावस्था तेन श्यामं श्यामवर्णं यत् जम्बूनिकुञ्जं तस्मात् स्खलिता अतएव तनुतरङ्गा वल्लीमयी यस्या तां स्रवन्तीं नदीं उत्तरेण तस्या नद्या उत्तरदिग्भागे इत्यर्थः।

सादरमुत्थाय उन्मुखः कृताञ्जलिः।

क्वचित्सौम्य! प्रियसहचरी विद्युदालिङ्गति त्वाम्?
आविर्भूतप्रणयसुमुखाश्चातका वा भजन्ते?।
पौरस्त्यो वा सुखयति मरुत् साधु संवाहनाभिः?
विष्वग्विभ्रत्सुरपतिधनुर्लक्ष्म लक्ष्मीं तनोति ॥३२॥

[आकर्ण्य।] अये! प्रतिरवभरितकन्दरानन्दितोत्कण्ठनीलकण्ठकलकेकानुबन्धिना मन्द्रहुङ्कृतेन, मामनुमन्यते, यावदर्थये। भगवन् जीमूत! (३३)

---

एनशब्दयोगे द्वितीया। उपचिता वर्द्धमाना घना निविड़ा माला श्रेणी यस्य, अतएव प्रौढ़तापिञ्छनीलः परिपक्वताध्रतरुवत् नीलवर्ण इत्यर्थः। नूतनतोयवाहः नवमेघः अद्रेः पर्वतस्य शिखरं शृङ्गं श्रयति अवलम्बते।

(३२) कच्चिदित्यादि। प्रार्थनोचितं सुभगप्रश्नमाह। हे सौम्य सुन्दर! प्रिया वल्लभा सहचरी सततानुगता विद्युत् त्वामालिङ्गति कच्चित्। कथयेत्यर्थः। कच्चित् कामप्रवेदन इत्यमरः। विरहित्वेन कान्ताभिलाषात् प्रथमं कान्तासङ्गमप्रश्नः। प्रियालिङ्गने सुखं तद्विरहे दुःखमिति त्वमपि जानासीति ध्वनितम्। यद्वा। कच्चिदेवमभिमतं ममेत्यर्थः। आविर्भूतप्रणयेन उत्पन्नस्नेहेन सुभगाः सुमुखाश्चातकास्त्वां सेवन्ते वा?। वा समुच्चये। अनेनार्थिसम्पत्तिरुक्ता। पौरस्त्यः मरुत् पुरोवातश्च साधु संवाहनाभिः मृदुप्रेरणाभिस्त्वां सुखयति वा?। अन्योऽपि सहायश्चरणमुष्टिग्रहणादिरूपसंवाहनां कुरुत इति ध्वनिः। अनेन सहायसम्पत्तिरुक्ता। विष्वक् सर्वतो लक्ष्मीं शोभां बिभ्रत् सुरपतिधनुः इन्द्रधनुः कर्तृ लक्ष्म चिह्नं तव तनोति। अनेन प्रसाधनमुक्तम्। विश्वं बिभ्रदिति पाठे हे विश्वं बिभ्रद्द भुवनं दधान। वर्षेण शस्यादिसमृद्ध्या जगदुपकारकत्वमुक्तम्। प्रसाधनमाह। इन्द्रधनूरूपं चिह्नं तव शोभां तनोति। बिम्बं बिभ्रदिति पाठे तु बिम्बं मण्डलं शोभां तनोति। कीदृशम्। इन्द्रधनुश्चिह्नं बिभ्रद्दधानम्। तदिह जगदुपकारकतया ममाप्युपकारं करिष्यसीति भावः।

(३३) गर्जितेनानुमतिमाह। अये इति। प्रतिशब्दभरितकन्दरलीनानन्दिता

दैवात्पश्येर्जगति विचरन्निच्छया मत्प्रियां चेत्
आश्वास्यादौ तदनु कथयेर्माधवीयामवस्थाम् ।
आशातन्तुर्न च कथयतात्यन्तमुच्छेदनीयः,
प्राणत्राणं कथमपि करोत्यायताच्याः स एकः ॥३४॥

[सहर्षम् । ] अहो ! प्रचलितः तदन्यत्र सञ्चरामि (३५) ।

परिक्रामति ।

मक । [सोद्वेगम् । ] कथमिदानीमुन्मादोपरागो माधवेन्दुमास्कन्दति, हा तात ! हा अम्ब ! भगवति ! परित्रायस्व, परित्रायस्व पश्य माधवावस्थाम् । (३६)

---

समुद्गीत्कण्ठा यस्य सः । यद्वा । आनन्दिता हृष्टा उत्कण्ठा उदग्रीवा इत्यर्थः । मन्द्रं गभीरम् । अनुमन्यते स्वीकरोति । आर्त्तिवशाद्देवत्वारोपणेन भगवन्निति । अवधारणे यावत् । जीमूत ! मेघ ! ।

(३४) दैवादित्यादि । इच्छया जगति विचरंस्त्वं मत्प्रियां यदि दैववशात् पश्येर्द्रक्ष्यसि तदा प्रथमं तां प्रबोध्य अथ माधवदशां कथयिष्यसि । अवस्थानिवेदनेन तन्मरणमाशङ्क्याह । कथयता त्वया आशा पुनःसङ्गमप्रत्याशा सैव तन्तुः जीवनबन्धहेतुत्वात् नैव अत्यन्तम् अत्यर्थम् उच्छेदनीय उच्छेद्यः । चैवार्थे । अत्र हेतुमाह । स आशातन्तुः एकस्तस्याः प्राणत्राणं कष्टाकथ्या करोति इत्यर्थः । इह तावत्कालं सा जीवति न वेति सम्भावना दर्शनस्य दैवादित्यनेनोक्तम् । प्रसङ्गतो मत्कार्य्यमिति जगति विचरन्नित्यनेनोक्तम् । मत्प्रियामित्यनेन सुकुमारत्वादिना विरहदुःखासहिष्णुता उक्ता । आदावाश्वासनं वार्त्ताश्रवणपटुत्वार्थम् । अत्यन्तमित्यनेन मध्यमविधया दशाकथनम् । तेन च तन्नैराश्यनिषेध इत्युक्तम् । कथमपीत्यनेन आशातन्तुमात्रं तद्रक्षणाय कल्पत इत्युक्तम् । आयताच्या इत्यनेन कटाचादिस्मरणेन गुणकीर्त्तनम् । माधवस्येयं माधवीया । छद्मान्तः । उन्मादावस्थेयम् असम्बद्धप्रलापात् ।

(३५) सहर्षत्वं मद्वचनमङ्गीकृत्य प्रचलित इति ।

(३६) उपरागो राहुग्रासः । शैशवे सङ्कटप्रदेशे पित्रादीनां स्मरणस्याभ्यस्ततया विरहसङ्कटेऽपि तदाह हा तातेति ।

माध । [द्विपदिकया सर्वतोऽवलोक्य । ] धिक् प्रमादः । (३७)
नवेषु लोध्रप्रसवेषु कान्तिर्दृशः कुरङ्गीषु गतं गजेषु ।
लतासु नम्रत्वमिति प्रमथ्य, व्यक्तं विभक्ता विपिने प्रिया मे ॥३८॥
हा प्रिये मालति ! [ इति मूर्च्छति । ]

मक । सुहृदि गुणनिवासे प्रेयसि प्राणनाथे
कथमिव सहपांसुक्रीडनप्रौढसख्ये ।
प्रियजनविरहाधिव्याधिवेगं दधाने,
हतहृदय ! विदीर्य्य त्वं द्विधा न प्रयासि ? ॥३९॥

माध । [आश्वस्योत्थाय । ] सुलभानुकारः खलु जगति वेधसो निर्माणसन्निवेशः, भवतु एवं तावत् । [उच्चैः । ] अयमहं भोः प्रणिपत्य भूधरारण्यचारिणः सत्वान् विज्ञापयामि, मां सुहृत्तमवधानदानेन अनुगृह्णन्तु भवन्तः । (४०)

---

(३७) प्रमादोऽनिष्टम् ।

(३८) नवेष्वित्यादि । नूतनलोध्रपुष्पेषु कान्तिः पाण्डिमा गौरत्वं वा इह नवपदेन स्निग्धता उक्ता । दृशो विलोकितानि हरिणीषु । गतं गमनं हस्तिषु । नम्रत्वं लतासु । इति शब्द आद्यर्थे । हेला लीलेत्यमी हावा इतिवत् । प्रमथ्य मारयित्वा मे प्रिया विपिने विभक्ता खण्डखण्डीकृत्य धृता । यद्वा । इतिः प्रकारार्थः । तेन लोध्रप्रसवादिभिर्मे प्रिया विभागीकृता । कान्त्यादि-विभागद्वारा प्रियाविभाग एव उन्नीयत इत्यवधेयम् । विपिन इति प्राणिवध-स्थानाभिप्रायम् ।

(३९) सुहृदीत्यादि । हे हतहृदय ! कथमपि विदीर्य्य द्विधा त्वं न प्रयासि ? । हतेति निन्दायाम् । सुहृदे मित्रे गुणनिधाने अतिप्रेमवति जीवेश्वरे सहधूलिक्रीड़ागाढ़मैत्रे कान्तावियोगमनोव्यथाव्याधिमन्तर्दधाने सति । सुहृदि-त्यादौ हेतुहेतुमद्भावः । धूलिः स्त्रियां पांसुर्नेत्यमरः ।

(४०) प्रियाविभागाशङ्कां निरस्यति सुलभेति । सन्निवेशः प्रकारः । अनु-

भवद्भिः सर्वाङ्गप्रकृतिरमणीया कुलवधू-
रिहस्थैर्दृष्टा, वा विदितमथवास्याः किमभवत् ।
वयोऽवस्थां तस्याः शृणुत, सुहृदो ! यत्र मदनः,
प्रगल्भव्यापारश्चरति हृदि मुग्धस्य वपुषि ॥ ४१ ॥

कष्टं भो ! कष्टम् ।

केकाभिर्नीलकण्ठस्तिरयति वचनं ताण्डवादुच्छिखण्डः,
कान्तामन्तःप्रमोदामभिसरति मदभ्रान्ततारश्चकोरः ।
गोलाङ्गूलः कपोलं छुरयति रजसा कौसुमेन प्रियायाः,
किं याचे यत्र तत्र ध्रुवमनवसरग्रस्त एवार्थिभावः ॥ ४२ ॥

---

कारः सादृश्यम् । तथा च लोध्रप्रसवादीनि प्रियाकान्त्याद्यनुकारीणि न तु सा विभक्तेति भावः । सत्त्वान् प्राणिनो विज्ञापयामीति सानुनयं वचनम् ।

(४१) भवद्भिरित्यादि । भवद्भिः इहस्थैः सर्वाङ्गेषु स्वभावरम्या सा कुलवधूर्दृष्टा वा । अथवास्या भवद्भिः किं विदितमभवत् । शुभमशुभं वा किं विज्ञातमित्यर्थः । ननु तस्याः किं वय इत्याह । हे सुहृदः ! तस्या वयोऽवस्थां शृणुत । यत्र वयोऽवस्थायां हृदि मदनः प्रगल्भव्यापारी वपुषि मुग्धो बालश्चरति । एतेन वयःसन्धिः उक्ता । सर्वाङ्गेत्यनेनाभिज्ञानप्रकाशनम् । कुलवधूत्वेन चाञ्चल्याभावः । इहस्थैरित्यनेन परिचयचातुरी । वाकारद्वयेन दर्शनवृत्तान्तयोः सफलत्वं दर्शयति । सुरते निःसाध्वसता प्रागल्भ्यं समुदाहृतम् । इति भरतः ।

(४२) केकाभिरिति । किं यत्र तत्र याचे । अपि तु न किमपि प्रार्थये । यतोऽप्रस्तावग्रस्तोऽर्थिभावोऽर्थित्वम् । अनवसरमाह । नृत्यादुन्नतपिच्छभारो मयूरः केकाभिर्वचनं छादयति । चकोरः पक्षिभेदो मत्ततया भ्रमत्तारकः सन् चित्तहर्षात् प्रियामभिसरति । गोलाङ्गूलः श्याममुखो वानरः कौसुमेन रजसा पुष्पजधूल्या कान्तायाः कपोलौ चित्रयति । अतः सत्त्वानामन्यत्रासक्ततयार्थित्वानवसर इति भावः । प्लवङ्गकीशप्लवगगोलाङ्गूलवलीमुखा इत्यमरमाला । कं याचे इति पाठे कं प्राणिनं प्रार्थये इत्यर्थः ।

अयञ्च। दन्तच्छदारुणिमरञ्जितकान्तदन्त-
सुन्नस्य चुम्बति वलीवदनः प्रियायाः।
काम्पिल्लका-प्रसवपाटलगण्डपालि-
पाकारुणस्फुटितदाडिमकान्ति वक्त्रम्॥ ४३॥

एषः प्रियतमास्कन्धविश्रान्तकरो रोहिणानोकहस्कन्ध-विश्रान्तकन्धरः करी। कथमत्राप्यनवसरः।

कण्डूकुड्मलितेक्षणां सहचरीं दन्तस्य कोट्या लिखन्,
पर्यायव्यतिकीर्णकर्णपवनैराह्लादिभिर्वीजयन्।
जग्धार्द्धैर्नवशल्लकीकिसलयैरस्याः स्थितिं कल्पयन्,
धन्यो वन्यमतङ्गजः परिचयप्रागल्भ्यमभ्यस्यति॥४४॥

अयन्तु। नान्तर्वर्त्तयति ध्वनत्सु जलदेष्वामन्द्रमुन्नर्जितम्,
नासन्नात्सरसः करोति कवलान् आवर्जितैः शैवलैः।

---

(४३) दन्तेत्यादि। वलीवदनो वानरोऽयं कान्ताया मुखमुत्क्षिप्य चुम्बति। कीदृशम्। अधररागेण रक्ता मनोज्ञा दशना यत्र तत्। काम्पिल्लो रोचनीवृक्षः। स्वार्थे कन्। तस्य प्रसवेन पुष्पेण फलेन वा रक्तगण्डप्रदेशः। पाकारुणः पाकान्तरमन्तिमपाकस्ततः स्फुटितं विदीर्णं यद्दाड़िमफलं तत्कान्ति। तत्सममित्यर्थः। तदिहाप्यनवसर एव। शाखामृगवलीमुखा इत्यमरः। काम्पिल्लः कर्कशश्चन्द्रो रक्ताङ्गो रोचनीत्यपीत्यमरः। रोहिणानोकहो रोहणवृक्षः।

(४४) कण्ड्वित्यादि। अयं धन्यः सुकृती वन्यमतङ्गजः वन्यहस्ती अस्याः प्रियायाः परिचयप्रागल्भ्यं सुरतनिःसाध्वसताम् अनुतिष्ठति। कीदृशः। कण्डूकुड्मलितेक्षणां कण्डूतिमुद्रितनयनां प्रियां दन्ताग्रेण आलिखन् ईषदुल्लिखन्। कण्डूयन्नित्यर्थः। अत एव कण्डूकाले कुड्मलितेक्षणत्वं भवति। पर्य्यायेण क्रमेण व्यतिकीर्णौ निक्षिप्तौ कर्णौ तयोर्वातैः सुखदैर्वीजयन्। कवलितार्द्धैर्नवशल्लकीपल्लवैरस्याः स्थितिं प्राणधारणं कल्पयन्।

(४५) नान्तरित्यादि। अयं सम्बेरमो हस्ती ताम्यति ग्लानो भवति। नूनं निश्चितं प्रेयसीविश्लेषेण विह्वलः। जलदेषु ध्वनत्सु सत्सु ईषद्गम्भीरमुद्गत-

दानज्यानिविषादमूकमधुपव्यासङ्गदीनाननो,
नूनं प्राणसमावियोगविधुरस्तम्बेरमस्ताम्यति ॥४५॥

अलमनेनायासितेन अन्यतः सञ्चरामि। [विलोक्य।] एष सानन्दं सहचरीसमाकर्ण्यमानमधुरगम्भीरकण्ठगर्जितध्वनिः अपरो मत्तमातङ्गयूथपालः, प्रत्यग्रविकसितकदम्बसम्पातसुरभि-शीतलामोदबहुलसंवलितमांसलकपोलनिष्यन्द-कर्दमितकषायकरटः, समुद्दलितकमलिनीखण्डविप्रकीर्णपर्णकमलकेसर-मृणालकन्दकोमलाङ्कुरमाहरन्, अनवरतप्रवृत्तकमनीयकर्ण-तालताण्डव-प्रचल-जर्जरितजलतरङ्गविततनीहारं समुत्रस्त-कुररसारसं सरोऽवगाह्य, विहरति भवतु एवमाभाषे। महाभाग! नागपते! श्लाघ्ययौवनः खलु असि, कान्तानुवृत्तिचातुर्यम् अपि अस्ति भवतः। [सापवादम्।] (४६)

लीलोत्खातमृणालकाण्डकवलच्छेदेषु सम्पादिताः,
पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः।

---

कण्ठगर्जनं नान्तर्वर्त्तयति न करोति समीपस्थात् सरस आवर्जितैर्मिलितैः शैवलैः कवलान् न करोति। मदहान्या यो विषादस्तेन मूकानां भ्रमराणां व्यासङ्गेन अन्यचित्ततया दीनाननः शोच्यमुखः। यद्वा। व्यासङ्गो विशेषेणासङ्ग इत्यर्थः। तदिह मदहानिश्चिन्तया सन्तापात्। दीनत्वमधीसुखचिन्तनात्। एतेन अनुभूतिसञ्जाता विषयव्यावृत्तिरुक्ता।

(४६) अहमिवायमपि कान्तातिरिक्तमन्यत् न वेत्तीत्यत आह। अलमिति। रतौत्सुक्यात् मधुरकण्ठगर्जितश्रवणाद्वा सानन्देति। मातङ्गो हस्ती। सम्पातः सम्पर्कः। सङ्गलितो मिलितः। मांसलः पीनः। निष्यन्दो मदः। कषायः सुगन्धिः। करटो गण्डदेशः। सुरभौ च कषायः स्यादिति शाश्वतः। समुद्दलितमुन्मूलितम्। पर्णं पत्रम्। तालो गीतक्रियामाने मध्यमाङ्गुलिसम्मित इत्यमरमाला। नीहारस्तु कुहेलिकेति हारावली। कुररः पक्षिभेदः। अनुवृत्तिः सेवा। सापवादं सदोषम्।

सेकः शीकरिणा करेण विहितः कामं विरामे पुन-
र्न स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम् ॥४७॥

कथमवधीरणानीरसं व्रजति। हन्त मूढ़ एवास्मिन् वने-
चरे वयस्यमकरन्दोचितं व्यवहरामि, हा वयस्य ! (४८)।

धिगुच्छ्वसितवैशसं मम यदित्थमेकाकिनो,
धिगेव रमणीयतां त्वदनुभावभावादृते।
त्वया सह न यस्तयाच दिवसः स विध्वंसताम्
प्रमोदमृगतृष्णिकां, धिगपरत्र या जायते ॥४९॥

---

(४७) लीलेत्यादि। क्रीडोन्मूलितविसदण्डकवलसमाप्तिषु विकसत्पद्मसुरभि-तस्य जलस्य गण्डूषसंक्रान्तयः सम्बन्धाः सम्पादिता दत्ताः। पुष्यदिति पाठे पुष्टीभवदित्यर्थः। अम्भःकणवता स्थूलहस्तेन सेकः कृतः। तदिदं द्वयं कामं युक्तमेव। दोषमाह। विरामे सरोऽवगाहविरतौ गमनकाले पुनरकुटिलनाल-पद्मपत्रच्छत्रं न स्नेहाद्धृतम्। एतदयुक्तमित्यर्थः। अतः कान्तानुवृत्तिं न जाना-सीति भावः। पुष्कराम्भोरुहाणि चेत्यमरः। गण्डूषपदेन स्वयं पीत्वा जलदानं ध्वनितम्। नलिनी पद्मिनी पद्ममित्यमरलता। अरालः कुटिले मत इति मेदिनीकारः। आतपात्त्रायत इत्यातपत्रमित्युचितं पदम्।

(४८) चलचित्तत्वेन पार्श्वस्थं मित्रमपश्यन् सखेदमाह कथमिति।

(४९) धिगित्यादि। इत्थमेकाकिनो मम यदुच्छ्वसितवैशसं प्राणधारण-दुःखं तद्धिग् वृथा। एकाकित्वमत्र हेतुः। धिगेव रमणीयवस्त्वनुभवान् वृथा-भाविन इति मुख्यपाठः। रम्यपदार्थविषयानुभवान्निष्फलोत्पादशीलान् धिक्। रमणीयवस्त्वनुभवादिति पाठे वृथाभाविनोऽनुभवाद्रम्यवस्तु धिक्। निष्फलं तज्-ज्ञानमित्यर्थः। धिगेव रमणीयतां त्वदनुभावभावादृत इति पाठे मम सौन्दर्या-दिकं धिक्। कुतः। तवानुभावः सद्भावस्तत्र भावोऽभिप्रायस्तं विना। यद्वा। अनुभावे वागङ्गसत्त्वाभिनये भावः सत्त्वं तं विना। वागङ्गसत्त्वाभिनयेऽनुभावस्तु स्मृतो बुधैः। इति भरतः। भावादित्यृते योगे पञ्चमी। त्वया मकरन्देन तया मालत्या च सह यो दिवसो नास्ति सोऽपि दिवसो ध्वंसतां विलीयताम्। अन्यत्र

मक। अये ! उन्मादमोहान्तरितोऽपि सम्प्रति अयं मां प्रति अप्रतिकूलः, यतः कुतश्चिद्व्यञ्जकात्प्रबुद्ध एवास्य सहजस्नेहसंस्कारः तत् असन्निहितमेव मां मन्यते (५०)। [ पुरः स्थित्वा ] एष पार्श्वचर एव ते मकरन्दो मन्दभाग्यः।

माध। प्रियवयस्य ! सम्भावय, परिष्वजस्व मां, प्रियान्तु मालतीं प्रति निराशः परिश्रान्तोऽस्मि (५१)। [इति मूर्च्छति]।

मक। एवं सम्भावयामि जीवितेश्वरम्। [विलोक्य सकरुणम्। ] हा कष्ट ! आविर्भूतमत्यरिष्वङ्गोत्कण्ठ एव निश्चेतनः संवृत्तः तत्किमिदानीमाशाव्यसनेन। सर्वथैव मे नास्ति वयस्य इति परिच्छेदो युक्तः (५२)। हा वयस्य !।

यत्स्नेहसंज्वरवता हृदयेन नित्य-
मावद्धवेपथु विनापि निमित्तयोगात्।
त्वद्व्यापदो गणयतो भयमन्वभावि
तत्सर्वमेकपद एव मम प्रशान्तम् ॥ ५३ ॥

---

मालतीमकरन्दाभ्यां या प्रमोदमृगतृष्णा मम जायते तामपि धिक्। युवाभ्यां विना दैवान्मे हर्षोऽपि आभासीभूत इति भावः। अत एव प्रमोदस्य मृगतृष्णाया रूपकेण अलीकत्वमुक्तम्।

(५०) उन्मादमशायामनिश्चयात् यतः कुतश्चिदित्युक्तात् व्यञ्जकात् संस्काराभिव्यञ्जकात्। प्रबुद्धः उद्बुद्धः।

(५१) सम्भावय पालय। अमाद्वैराग्याच्च मूर्च्छेत्येतदर्थं निराश इत्युक्तम्।

(५२) जीवितेश्वरमित्यनेन तुल्या जीवनसामग्री उक्ता। निश्चेष्टः प्रलययुक्तजनाकृतिः। परिच्छेदो निश्चयः।

(५३) यदित्यादि। स्नेहसंज्वरवता स्नेहरूपसन्तापवता हृदयेन हृदा निमित्तयोगात् विनापि भयकारणं विनापि आवद्धवेपथु सकम्पं यत् भयं नित्यम् अन्वभावि अनुभूतं तत्सर्वं त्वद्व्यापदः त्वदीयविपत्तीर्गणयतः सम्भावयतो मम

सखे ! वरं तावन्त एवातिक्रान्ता मुहूर्त्ताः, तथाविधमपि भवन्तं येषु चेतयमानमनुभूतवानस्मि, (५४) इदानीं तु,

भारः कायो, जीवितं वज्रकीलं
काष्ठाः शून्या निष्फलानीन्द्रियाणि ।
कष्टः कालो मां प्रति त्वत्प्रयाणे,
शान्तालोकः सर्वतो जीवलोकः ॥ ५५ ॥

[विचिन्त्य] तत्किं नु खलु माधवास्तमयसाक्षिणा मया भवितव्यमिति जीवामि ? भवतु अमुष्मादेव गिरिशिखरात्

---

एकपदे एकस्मिन् चणे प्रशान्तं परिसमाप्तम् । कदा ते किं स्यादित्यादिभयं प्रकृतदशया प्रशान्तमिति भावः । एतत्पचे गणयतेति पाठे विधिनेत्यर्थात् । यद्वा । त्वद्व्यापदो गणयता हृदा यद्भयमनुभूतं तदधुना गतमित्यर्थः । तथा च त्वन्निमित्तमधुना तु सहेतुकैव विपदिति भावः ।

(५४) वरं मनागिष्टे । मनागिष्टे वरं यत्तु कश्चिदाह तदव्ययमिति शाश्वतः । अव्ययानामनेकार्थत्वादुक्तोऽर्थः सुलभ एव । चेतयमानं चेतनावन्तम् ।

(५५) भार इत्यादि । कायो भारो धर्त्तुमशक्यः । धारणाशक्यतया व्याधिः । जीवितं जीवनं वज्रकीलकमनुच्छेदात् । अनेन मर्मच्छेदः । मर्मच्छेदेन चिन्ता । दिशः शून्या इति जड़ता । इन्द्रियाणि नेत्रादीनि अफलानि कार्य्याचमाणि । बाह्यविषयाग्रहाद्दैन्यम् ! कालः कष्टो दुःखदः । दैन्येन जीवनाचमता । संसारः सर्वत्र प्रशान्तदर्शनः । यथा च त्वां विना न मज्जीवनमिति भावः । त्वत्प्रयाणे तव गमने विनाश इति यावत् । सतिसप्तमी इयम् । मां प्रतीति सर्वत्र योज्यम् । यद्वा । पृथिव्यादिद्रव्यनवके प्रधानद्रव्यदूषणेन दोषमाह । तत्र काय इति पृथिव्या जीवनमित्यात्मनः काष्ठा इति दिश इन्द्रियाणि इति इन्द्रियाणां काल इति कालस्य लोक इति विषयाणां दोष उक्तः । शान्तालोकोऽनुपभोग्य इत्यर्थः ।

(५६) अस्तमयो विनाशः । व्याधिदशायामयम् । यदाह । निर्वेदश्चैव चिन्ता च दैन्यं ग्लानिः श्रमस्तथा । जड़ता मरणं चैव व्याधौ तु करुणेऽपि

पाटलावत्यां निपत्य, माधवस्य मरणाग्रेसरो भवामि (५६)। [ सकरुणं निवृत्य आलोक्य । ] कष्टं ! भोः कष्टम् !

तदेतदसितोत्पलद्युतिशरीरमस्मिन्नभू-
न्ममातिदृढपीड़नैरपि न तृप्तिरालिङ्गनैः ।
यदुल्लसितविस्मया वत निपीतवत्यः पुरा,
नवप्रणयविभ्रमाकुलितमालतीदृष्टयः ॥५७॥

आश्चर्य्यम् एतस्यां तनौ अचरमे वयसि तावती गुणसमाहारस्य (५८) सन्निवेशः, कथमिवाभूत् । सखे माधव ! ।

आपूर्णश्च कलाभिरिन्दुरमलो यातश्च राहोर्मुखम्,
सञ्जातश्च घनाघनो जलधरः शीर्णश्च वायोर्जवात् ।
निर्वृत्तश्च फलेग्रहिर्द्रुमवरो दग्धश्च दावाग्निना,
त्वं चूडामणितां गतश्च जगतः प्राप्तश्च मृत्योर्वशम् ॥५९॥

---

च ॥ पाटलावती नदीभेदः । प्रियदर्शनार्थं निवर्त्तनम् । मूर्च्छां दृष्ट्वा सकरुणम् ।

(५७) तादृशं दृष्ट्वा सखेदमाह । तदित्यादि । सखे ! यत्तवाङ्गं नीलनलिनश्यामं तदेतत् । अस्मिन्नङ्गे गाढ़ासञ्जनैः अपि आलिङ्गनैर्मम तृप्तिर्नाभूत् । यदङ्गं नवप्रणयविभ्रमाकुलितमालतीदृष्टयः नवस्नेहविलासव्याकुलमालतीदृष्टय उल्लसितविस्मया उपचिताद्भुताः पुरा पूर्वं निपीतवत्यो नित्यादरेण अवलोकितवत्य इत्यर्थः । वत खेदे ।

(५८) अचरमे नूतने । समाहारो मेलकः ।

(५९) आपूर्ण इति । कलाभिः षोड़शांशैः आपूर्णश्च अमल इन्दुश्चन्द्रो राहोर्मुखं यातः सञ्जात उत्पद्यमानो घनाघनो वहुल इत्यर्थः जलधरः वायोर्जवात् वेगात् शीर्णश्च । निर्वृत्तश्च उत्पन्नोऽपि फलेग्रहिः द्रुमवरः फलभरितः तरुराजः दावाग्निना दग्धश्च । त्वं जगतः चूड़ामणितां श्रेष्ठत्वं गतोऽपि मृत्योर्वशं प्राप्तोऽसि ।

[विचिन्त्य।] तत्परिष्वजे अहं तावदेवं गतमपि वयस्यं, अर्थितश्च अनेन सम्प्रत्येव अयमर्थः। [परिष्वज्य।] हा वयस्य! विमलविद्यानिधे गुणगुरो! मालतीस्वयंग्राहजीवितेश्वर! हा सौन्दर्य्यविनिर्जितरतिरमणच्छाय! हा कामिनीहृदयमन्मथ! हा बान्धवपयोनिधिशरच्चन्द्र! हा कामन्दकीमकरन्दानन्दन-सुखचन्द्र! माधव! अयमत्र ते जन्मनि अपश्चिमः पश्चिमावस्थां प्रापितो मकरन्दबाहुपरिष्वङ्गः। (६०) सएष मकरन्दो मुहूर्त्त-मपि जीवतीति मैवं संस्थाः।

आजन्मनः सहनिवासतया मयैव
मातुः पयोधरपयोऽपि समं निपीय।
त्वं पुण्डरीकमुख! बन्धुतया निरस्त-
मेको निवापसलिलं पिबसीत्ययुक्तम् ॥६१॥

[सकरुणं विमुच्य परिक्रम्य च।] इयमधस्तात्पाटला-वती, भगवति आपगे! प्रियसुहृदो यत्र मम तत्रैव सम्भवो भूयात् अमुत्र भूयोऽपि भूयासमनुसञ्चरः (६२)।

इति पतितुमिच्छति।

---

(६०) एवं गतं मूर्च्छितम्। अयमर्थ आलिङ्गनरूपः। मया सहेति शेषः। अपश्चिमो दुर्लभः। पश्चिमावस्था शेषावस्था।

(६१) आजन्मेत्यादि। हे पद्मास्य! जन्मन आरभ्य मयैव समं तुल्यग्रह-तया मातुः स्तन्यं पीत्वा अधुना त्वमेको निवापसलिलं प्रेतोदकाञ्जलिं बन्धुसमूहेन दत्तं पिबसि इत्येतदयोग्यम्। सहपानार्थमहमप्यागच्छामीत्यर्थः। निवापः पितृ-दैवे स्यादित्यमरः।

(६२) आपगा नदी। प्रियस्येत्यादि। मित्रस्य सम्भव उत्पत्तिर्यत्र ममापि तत्रैव भूयात्। अमुत्र अपरस्मिन् लोके पुनरपि अस्य अनुचरो भूयासमित्यर्थः। भूयादित्यादौ प्रार्थनायां लिङ्।

[प्रविश्य सहसा सौदामिनी। वारयित्वा।] वत्स! अलं साहसेन।

मक। [विलोक्य।] अम्ब! कासि? किमहं त्वया प्रतिषिद्धः?

सौदा। आयुष्मन्! किं त्वं मकरन्दः?

मक। सुष्ठ, स एवास्मि मन्दभाग्यः।

सौदा। वत्स! योगिनी अस्मि, मालत्या अभिज्ञानञ्च धारयामीति।

वकुलमालां दर्शयति।

मक। [सोच्छ्वासं सकरुणम्।] आर्य्ये! अपि जीवति मालती?

सौदा। अथ किम्। वत्स! किमत्याहितं (६३) माधवस्य यदनिष्टे व्यवसितोऽसि इति आकम्पितास्मि। अथ माधवः क्व?।

मक। आर्य्ये! तमहं प्रमुग्धमेव वैराग्यात्परित्यज्य आगतः, तदेहि, तूर्णं सम्भावयावः। [त्वरितं परिक्रामतः।]

माध। [आश्वस्य।] अये! प्रतिबोधितः एवास्मि केनापि, नूनमस्य अभिनवजीमूतजलवाहिनः प्रभञ्जनस्य अनपेक्षितास्मदवस्थोऽयं व्यापारः (६४)।

मक। दिष्ट्या पुनः प्रत्यापन्नचेतनो वयस्यः।

सौदा। [विलोक्य।] संवदति उभयोर्मालतीनिवेदितः शरीराकारः (६५)।

---

(६३) अत्याहितं प्रमीढोऽभूत्।

(६४) प्रभञ्जनो वायुः।

(६५) उभयोर्माधवमकरन्दयोः।

माध। भगवन् पौरस्त्यपवन!

भ्रमय जलदानम्भोगर्भान् प्रमोदय चातकान्,
कलय शिखिन: केकोत्कण्ठान् कठोरय केतकान्।
विरहिणि जने मूर्च्छां लब्धा विनोदयति व्यथाम्
अकरुण! पुन: संज्ञाव्याधिं विधाय किमीहसे? ॥६६॥

मक। सुवृत्तमखिलजन्तुजीवनेन मातरिश्वना। (६७)

माध। देव वायो! तथापि भवन्तमेवं प्रार्थये। (६८)

विकसत्कदम्बनिकुरम्बपांशुना
सह जीवितं वह मम प्रिया यत:।
अथवा तदङ्गपरिवासशीतलं
मयि किञ्चिदर्पय भवान् हि मे गति:॥ ६९ ॥

---

(६६) भ्रमयेति। हे वात! अम्भोगर्भान् जलपूर्णान् जलदान् मेघान् भ्रमय चातकान् तदाख्यपक्षिण: प्रमोदय मेघजलदानेन सन्तोषय। केकोत्कण्ठान् केकारवोत्सुकान् शिखिनो मयूरान् कलय नर्त्तय केतकान् तदाख्यपुष्पाणि कठोरय त्वज्जलपातेन केतका: कठोरीभवन्तीत्यर्थ:। विरहिणि वियोगयुक्ते जने मयीतिशेष:। मूर्च्छां विरहदशाविशेषं लब्धा व्यथां विरहजन्यक्लेशं विनोदयति अपनुदति सति हे अकरुण! निर्दय! पुन: संज्ञाव्याधिं चैतन्यरूपरोगं विधाय जनयित्वा किमीहसे? चेष्टसे? एतावतापि किं त्वं न सन्तुष्टोऽसीति भाव:।

(६७) मातरिश्वा वायु:। वातीति वायुरित्युचितपदन्यासेन जीवनयोग्यता उक्ता।

(६८) तथापि अनिष्टकरणादपि।

(६९) विकसदित्यादि। मम प्रिया यतो यत्र तं देशं मम जीवितं विकसत्कदम्बनिकुरम्बपांसुना प्रफुल्लकदम्बसमूहधूल्या सह प्रापय। घटय मे इति वा पाठ:। सा विरहदीना म्रियेत अतस्तज्जीवनाय मज्जीवितं नयेति भाव:। पांशुना सहेत्यनेन परमाणुरूपं मे मनोऽपि तत्समूहे गमिष्यतीति न ते प्रयासोऽपि स्यादित्युक्तम्। नो वा तदङ्गपरिवासशीतलं प्रियाङ्गसदावस्थितिहिमं यत्किञ्चि-

कृताञ्जलिः प्रणमति।

सीदा। सुसमाहितः खलु अभिज्ञानदर्शनस्य अवसरः (७०)।

अञ्जली मालां मुञ्चति।

माध। [साकूतविस्मयहर्षम्।] कथमियमस्मद्विरचिता प्रियायाः स्तनोद्भेददुर्ललितमूर्त्तिः अनङ्गमन्दिराङ्गणवकुल-प्रसवमाला (७१)।

[निरूप्य, सहर्षम्।] कः सन्देहः। तथाहि। स एवाय-मस्याः।

मुग्धेन्दुसुन्दरतदीयमुखावलोक-
हेलाविशृङ्खलकुतूहलनिह्नवाय।

---

हस्तु मयि तदर्पय देहि। ईरयेति पाठे प्रेरयेत्यर्थः। तदेव मे तापशान्त्यै स्यादिति भावः। अत्र हेतुमाह। यतो मम भवान् गतिः आश्रयः। आश्रय-स्याश्रितजीवनं युक्तमेवेति भावः। अपि वेति पाठेऽपिः सम्भावनायाम्।

(७०) समाहितो युक्तः। वायुप्रार्थनाप्रकरणात्।

(७१) प्रियाङ्गसङ्गिमालालोकात्सहर्षत्वम्। दुर्ललिता अतिप्रिया। अनङ्ग एव मन्दिरमनङ्गस्य वा मन्दिरम्।

(७२) मुग्धेत्यादि। अस्या मालायाः स एवायं भागो यो लवङ्गिकाया अपि सन्तोषमकरोत्। अपिपदान्मालत्या अपीत्यर्थः। विषमं ग्रथितं ग्रन्थना यत्र सः। विषमेण ग्रथित इति वा। अत्र हेतुमाह। मुग्धं मनोज्ञम् इन्दु-सुन्दरम् इन्दुकान्तं यन्मालतीमुखम्। यद्वा। विरहात् चामत्वादिना बालेन्दुवत् कान्तं यत् तदास्यं तदालोके सति हेलया शृङ्गारचेष्टया विशृङ्खलं सर्वत्र वर्त्तमानं यत् कौतुकं तद्गोपनाय दुर्व्यक्तेः पूर्वग्रथनादन्यथा दत्तैः पुष्पै रचितः। एतत्तु प्रथ-माङ्क एवं व्यक्तम्। ननु हेला स्त्रीविषया। यदाह भरतः। यौवने चिदश स्त्रीणां विकारा नैवपातजाः। आदौ त्रयोऽङ्गजास्तेषां दश स्वाभाविकास्तथा। तत्रा-ङ्गजेषु हावहेलालक्षणम्। अक्षिभ्रुवोर्विकाराद्याः शृङ्गारस्य च सूचकाः। सग्रीवारेचका भावा हावास्तेभ्यः समुत्थिताः। य एव हावः सैवासौ शृङ्गाररस-

दुर्न्यस्तपुष्परचितोऽपि लवङ्गिकाया-
स्तोषं ततान विषमग्रथितोऽपि भागः॥ ७२॥

[सहर्षोन्मादमुत्थाय।] प्रिये मालति! ननु इयं वीक्ष्यसे। [सकोपमिव।] अयि (७३) मदवस्थानभिज्ञे!

प्रयान्तीव प्राणाः सुतनु! हृदयं ध्वंसत इव,
ज्वलन्तीवाङ्गानि प्रसरति समन्तादिव तमः।
त्वराप्रस्तावोऽयं न खलु परिहासस्य विषय-
स्तदक्ष्णोरानन्दं वितर मयि माभूरकरुणा॥७४॥

[सर्वतो दृष्ट्वा सनिर्वेदम्।] कुतोऽत्र मालती? [वकुलमालामुद्दिश्य।] अयि प्रियाप्रणयिनि वकुलमाले! उपकारिणी असि अतः स्वागतं भवत्याः।

---

सम्भवा। समाख्याता बुधैर्हेला ललिताभिनयात्मिका। अतो माधवे हेलेत्ययुक्तम्। नैवम्। स्त्रीणामित्यस्योपलक्षणत्वात्पुरुषेऽपि कामावस्थासाम्याद्धेला यदाह। हेला हावश्च भावश्च व्याजो विस्रम्भभाषणम्। चाटुः प्रेमाभिसन्धानं चकितं च विलासितम्। तत्र रागतः सहसा प्रवृत्तौ हेतुश्चित्तोल्लासो हेलेति। यद्वा। अवलोक्यत इत्यवलोकः। कर्मणि घञ्। इन्दुसुन्दरमालतीमुखेऽवलोक्या दृष्ट्या या हेला तया विसङ्कलं यन्माधवस्य कुतूहलं तद्गोपनायेत्यर्थः।

(७३) सङ्कल्पलिखितप्रियादर्शनाद्धर्षः। दर्शनाप्राप्त्या पुनराह। नन्विति। अत्रापि लाभादुपालभ्यते अयि इति।

(७४) परिहासाददर्शनमाशङ्क्य तदनवसरमाह। प्रयान्तीत्यादि। प्राणाः प्रयान्तीव सर्वतः शून्यत्वात्। हे सुतनु! हृदयं मनो ध्वंसत इव मोहात्। अङ्गज्वलनमतिदाहात्। एतेन व्याधिरुक्तः। सर्वतस्तमः प्रसरतीव। अनेन जड़ता। सकलेन्द्रियाणामग्रहात्। जड़तानन्तरं मरणशङ्कायामाश्वास एव युक्त इत्याह त्वरेति। खलु निश्चये। यत एवं ततो नेत्रप्रीतिं देहि। स्वं दर्शयेत्यर्थः। मद्विषये अकरुणो निर्दयो मा भूः न भविष्यसि। यद्वा। अकरुणो मा भूर्न भवसि। माङि लुङिति कालसामान्ये लुङ्। इवशब्द उत्प्रेक्षायाम्।

निष्प्रत्यूहाः प्रियसखि ! यदा दुःसहाः सम्बभूवु-
र्देहोद्दाहव्यसनगुरवो मन्मथोन्माथवेगाः।
तस्मिन् काले कुवलयदृशस्त्वत्समाश्लेष एव
प्राणत्राणं प्रगुणनमभून्मत्परिष्वङ्गकल्पः ॥७५॥

सकरुणं निर्वर्ण्य *

आनन्दमिश्रमदनज्वरदीपनानि
गाढानुरागरसवन्ति तदा तदा च।
स्नेहाकराणि मम मुग्धदृशश्च कण्ठे,
कष्टं स्मरामि तव तानि गतागतानि ॥७६॥

---

(७५) निरित्यादि। प्रियसखि ! बकुलमालि ! मालत्याः पद्माक्ष्याः मन्मथोन्माथवेगाः कामोन्मादोद्वेगा निष्प्रत्यूहाः निर्विघ्ना अत्यर्थं दुःसहा देहोद्दाहव्यसनगुरवः अङ्गदाहदुःखमहान्तः यदा यस्मिन् काले सम्बभूवुः सम्भूयोदिताः तत्र काले तस्यास्त्वदालिङ्गनमेव शीघ्रं प्राणरक्षकमभूत्। अत एव मदालिङ्गनतुल्यः। उन्माथ उन्मथनमुद्वेग इति यावत्। प्रगुणमिति पाठे प्रकृष्टगुणमित्यर्थः। क्रियाविशेषणं वा। कामदुःखोद्वेगस्य प्रियसङ्गस्य अलाभादविघ्नत्वम्। मालतीप्रणयित्वात् प्रियसखि इति। दुःसहत्वमधृतिकरणात्। उद्दाह उद्गतदाहः। व्यसनस्थाने व्यथन इति पाठे व्यथनं पीड़ा। अधुना मालां विना अस्याः कथं जीवनं भविष्यतीति भावः।

* निर्वर्ण्य निरूप्य।

(७६) आनन्देत्यादि। मम मालत्याश्च कण्ठे तव तानि गतागतानि स्मरामि। स्मरणस्य अतिदुःखदत्वात् कष्टम्। तदा तदा तस्मिंस्तस्मिन् काले। तत्र चौरिकाविवाहात् पूर्वं मालतीकण्ठगतेति गतं लवङ्गिकाबुद्ध्या माधवकण्ठमागतेत्यागतमित्येकम्। चौरिकाविवाहे मालत्या माधवकण्ठनीता अतो गतमथ तन्मुखदर्शनात्स्वकण्ठेऽर्पितेत्यागतमिति द्वितीयम्। पुनस्तव प्रणयवशान्माधवेन मालत्यै दत्तेति गतमिदानीं तु सौदामिन्या मालतीसकाशादानीय दत्तेति त्रीणि गतागतानि। अतएव बहुवचनम्। कीदृशानि। तद्दशायामन्तरान्तरा दर्शलाभादानन्दमिश्रितकामतापप्रकाशनानि। दृढ़ानुरागरसयोगीनि।

हृदये निधाय मूर्च्छति।

मक। [उपसृत्य वीजयन्।] समाश्वसिहि सखे! समाश्वसिहि।

माध। [आश्वस्य।] मकरन्द! किं न पश्यसि कुतोऽपि सहसैव मालतीस्नेहं वहतो वकुलदाम्नो लाभः तत्कथं नु मन्यसे किमेतदिति।

मक। वयस्य! इयमार्य्या योगेश्वरी अस्य मालत्यभिज्ञानस्य नेत्री।

माध। [विलोक्य सकरुणं कृताञ्जलिः।] आर्य्ये! प्रसीद, कथय, जीवति मे प्रिया? (७७)

सौदा। वत्स! समाश्वसिहि समाश्वसिहि! जीवति सा कल्याणिनी।

[माधवमकरन्दौ दृष्ट्वा उच्छ्वस्य।] आर्य्ये! यद्येवं तत् कथय कथमेष वृत्तान्त इति।

सौदा। पुरा किल करालायतने मालतीमुपहरन्नघोरघण्टः करवालपाणिना माधवेन व्यापादितः।

माध। [सोद्वेगम्।] आर्य्ये! विरम, परिज्ञातो वृत्तान्तः।

मक। क इव?

माध। सखे किमन्यत्? सकामा कपालकुण्डलेति (७८)।

मक। आर्य्ये! अप्येवम्?

---

स्नेहस्य आकरा येषु तानि। स्नेहं प्रीतिमाकुर्वन्ति व्याकुर्वन्तीति स्नेहाकराणि। कृञो हेत्वित्यादिना टप्रत्ययः। तदा तदा चेति चकारात् कालान्तरपरिग्रहः।

(७७) आर्य्या मान्या।

(७८) सकामा मदपकारेण सिद्धप्रतिज्ञेत्यर्थः।

सौदा। एवं यथानिवेदितं वत्सेन।

मक। कष्टं भोः कष्टम्!

कुमुदाकरेण शरदिन्दुचन्द्रिका
यदि रामणीयकगुणाय सङ्गता।
सुकृतं तदस्तु, कतमस्त्वयं विधि-
र्यदकालमेघविततिर्व्ययूयुजत्॥ ७९॥

माध। हा प्रिये मालति! कष्टमतिवीभत्समापन्नासि (८०)

कथमिव तदाभवस्त्वं कमलमुखि! कपालकुण्डलाग्रस्ता?।

उत्पातधूमलेखाक्रान्तेव कला शशधरस्य॥ ८१॥

भगवति कपालकुण्डले! (८२)

निर्माणमिव हि तदादरलालनीयं,
सा पूतनात्वमुपगाः शिवतातिरेधि।

---

(७९) कुमुदेत्यादि। कुमुदसमूहेन यदि शरच्चन्द्रचन्द्रिका सौन्दर्य्यगुणार्थं सङ्गता प्राप्ता तत् सुकृतं शोभनकरणमस्तु। द्वयोरपि रम्यत्वात्। अयं पुनः कः प्रकारः कुत्सितप्रकारो वा यदकालमेघपङ्क्तिर्व्ययूयुजत् वियोजयामास विच्छेदं कृतवतीत्यर्थः। ध्वनिना अत्र कुमुदाकरो माधवः चन्द्रिका मालती मेघसन्ततिः कपालकुण्डला इत्युक्तम्।

(८०) अतिवीभत्समिति। उद्वेगहेतुकपालकुण्डलादर्शनाद्वीभत्सः। यदाह। उद्वेजनैश्च बहुभिर्वीभत्सरसः समुद्भवति।

(८१) कथमित्यादि। कपालकुण्डलाग्रस्ता तत्कलिता, हे कमलमुखि! पद्ममुखि! तदा त्वमपि कथमभवः? भयात् कथं त्वमासीः किं त्वयोक्तं कस्ते त्राता अभूदित्यादिज्ञापनाय कथमिति सामान्यनिर्देशः। केतुकवलिता चन्द्रकलेव। एतदुपमया वीभत्सजविषादसम्भवा ग्लानिरभ्युक्ता। यदाह। अपस्मारस्तथोन्मादो विषादो मद एव च। मृत्युर्व्याधिर्भयं चैव भावा वीभत्ससम्भवाः।

(८२) स्त्रीबालं नैव घातयेदिति निजधर्मं जानत्या त्वया सा घातितेति सोल्लुण्ठमाह भगवति इति।

(८३) निर्माणमित्यादि। तन्निर्माणं मालतीरूपादिकमेव हि आदरेण

नैसर्गिकी सुरभिण: कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न चरणैरवताडनानि ॥ ८३ ॥

सौदा। वत्स! अलमावेगेन।

अकरिष्यदसौ पापमतिनिष्करुणैव सा।
नाभविष्यमहं तत्र यदि तत्परिपन्थिनी ॥८४॥

[माधवमकरन्दौ। प्रणम्य।] अतिप्रसन्नमार्य्याचरणै: (८५) तत्कथय, कथं पुन: त्वमेव अस्माकं बन्धु:।

सौदा। ज्ञास्यथ: खलु एतत् (८६)। [उत्थाय।] इयमिदानीमहम्,

गुरुचर्य्यातपस्तन्त्रमन्त्रयोगाभियोगजाम्।
इमामाक्षेपणीं सिद्धिमातनोमि शिवाय व: ॥८७॥

---

लालनीयं रक्षणीयं भवति। रम्यत्वादेव। पूतनात्वं राक्षसीत्वं तन्नाशेन मा उपगा मा गमिष्यसि। शिवताति: कल्याणकरी एधि भव। शिवतामुपेतीति पाठे तन्निर्माणम्। कर्त्तृ शिवतां कल्याणत्वं गच्छति। सुरभिण: सुगन्धस्य पुष्पस्य मूर्द्ध्नि स्थिति: मस्तके धृति: स्वभावसिद्धा। चरणै: पादै: अव पीड़नानि न स्वभावसिद्धानीत्यर्थ:।

(८४) अकरिष्यदित्यादि। असौ कपालकुण्डला पापं तद्वधरूपमकरिष्यदेव। अतिनिष्करुणा यत: सा। यदि तत्र स्थाने बधे वा तस्या: परिपन्थिनी विरोधिनी अहम् न अभविष्यम्। क्रियातिपत्तौ लृङ्। बुद्धिप्रत्यक्षतया असौ इति।

(८५) अतिप्रसन्नं प्रसाद: कृत:।

(८६) ज्ञास्यथ:। युवामित्यर्थात्।

(८७) गुर्वित्यादि। गुरुचर्या गुरुसेवा गुर्वी चर्या विशिष्टमनुष्ठानम्। तपश्चान्द्रायणादि। तन्त्रं मण्डलवर्त्तनादि। मन्त्रस्तारप्रभृतिदेवीनां तन्त्रस्य आगमस्य वा मन्त्र:। योग: समाधि:। एषु अभियोगादभ्यासात् जाताम् इमाम् आक्षेपणीम् आकर्षणीं सिद्धिं युष्माकं कल्याणाय विस्तारयामि।

इति समाधवा निष्क्रान्ता।

मक। आश्चर्यमाश्चर्यम्!

व्यतिकर इव भीमस्तामसो वैद्युतश्च
क्षणमुपहतचक्षुर्वृत्तिरुद्भूय शान्तः।

विलोक्य सभयम्।

कथमिह न वयस्यस्तत्किमेतत्, [विचिन्त्य] किमन्यत्।
प्रभवति हि महिम्ना स्वेन योगेश्वरीयम् ॥ ८८ ॥

[सवितर्कम्।] किमयमनर्थ इति सम्प्रति मुग्धोऽस्मि (८९)।

अपिच। अस्तोकविस्मयमपस्मृतपूर्ववृत्त-
मुद्भूतनूतनभयज्वरजर्जरं नः।

---

(८८) व्यतिकर इत्यादि। मालतीवार्त्तायाः अप्यज्ञानादयं तामसोऽन्धकारजः। अत एव भीमः। तज्जीवनज्ञानाद्वैद्युतश्चायं विद्युत्सम्बन्धी। व्यतिकरः सम्पर्कः। अत एवानन्दाश्रुनम्भारेण उपहतनेत्रवृत्तिः। कीदृशः। क्षणमुद्भूय शान्तः। अत एव विद्युद्विद्योतो वितर्कः। कथमिह स्थाने वयस्यो माधवोऽपि नास्ति। तत् किमिदं क्व गतः केन वा स नीत इति विचिन्त्येत्यर्थः। निर्णयमाह। अन्यत् किम्। यत इयं योगीश्वरी निजतपःप्रभावेण प्रभवति। अनया नीत इति भावः।

(८९) संशय्याह किमयमिति। सौदामिनीनयनेऽयं प्रयोजनं कपालकुण्डलानयनेऽनर्थं इति भावः।

(९०) अस्तोकेत्यादि। अस्माकं चेतः चित्तम् कर्तृ आनन्दशोकाभ्यां हर्षशोकाभ्यां शबलत्वं मिश्रत्वं गच्छति। कीदृशम्। अस्तोकविस्मयम् अनल्पाश्चर्यम्। एकदैव नानारससम्भवात्। अपस्मृतं विस्मृतं पूर्ववृत्तं मालतीहरणरूपं यत्र। अत एवानन्दः। उद्भूतं नवं भयं माधवापकारशङ्काकृतं तेन ज्वरेण जर्जरं जीर्णम्। अत एव शोकः। यद्वा। माधवानवलोकनेनोद्भूतनवशङ्काज्वरजर्जरतया शोकः। एकक्षण एव त्रुटितो घटितश्च प्रमोदो यत्र तत्। मालती-

एकत्र्चणत्रुटितसङ्घटितप्रमोह-
मानन्दशोकशबलत्वमुपैति चेतः ॥९०॥

तदत्रैव कान्तारगहने सह अस्मद्वर्गेण प्रविष्टां भगवतीमन्विष्य तस्या वृत्तान्तमेनं कथयिष्यामि। [इति निष्क्रान्तः।]

इति मालतीमाधवे नवमोऽङ्कः।

---

## दशमोऽङ्कः।

—:०:—

ततः प्रविशति कामन्दकी मदयन्तिका लवङ्गिका च।

कामं। [सास्रम्।] हा वत्से मालति! मदङ्गालङ्कारकारिणि। क्कासि देहि मे प्रतिवचनम्।

आजन्मनः प्रतिमुहूर्त्तविशेषरम्या-
ण्याचेष्टितानि तव सम्प्रति तानि तानि।
चाटूनि चारुमधुराणि च संस्मृतानि,
देहं दहन्ति हृदयं च विदारयन्ति ॥ १ ॥

---

लाभसम्भावनया त्रुटितो माधवापकारसम्भावनया घटित इति भावः। अत एवात्याश्चर्य्यम्। स्त्रीकशब्दोऽल्पपर्य्यायः। अस्मद्वर्गेण मदयन्तिकालवङ्गिकाभ्याम्। विप्रनष्टामिति कचिंचित् पुस्तके पाठो दृश्यते तत्रादृश्यमानामित्यर्थः।

---

(१) आजन्मन इति। आजन्मनः जन्मदिनपर्य्यन्तं प्रतिमुहूर्त्तं विशेषेण रम्याणि चारूणि आचेष्टितानि विलासादयः सम्प्रतीदानीं चाटूनि प्रियाणि चारुमधुराणि मृदूनि ललितानि च तानि तानि संस्मृतानि सन्ति देहं दहन्ति हृदयमन्तःकरणञ्च विदारयन्ति। एतानि मया सोढुमशक्यानि जातानीत्यर्थः।

[आकाशे । ] अपि च पुत्रि !

अनियतरुदितस्मितं विराजत्-
कतिपयकोमलदन्तकुड्मलाग्रम् ।
वदनकमलकं शिशोः स्मरामि
स्खलदसमञ्जसमुग्धजल्पितं ते ॥ २ ॥

मदयन्तिकालवङ्गिके । [ सास्रमाकाशे । ] हा पियसहि ! सुप्पसण्णमुहचन्दसुन्दरि ! कहिं गदासि, को वा सिरीसकुसुमसुउमारस्स दे सरीरस्साअं देव्वदुव्विलसअपरिणामो एक्कक्किआए उवगदो । महाभाअ माहव ! उपत्थिदत्थमिदमहूसओ दे जीअलोओ संवुत्तो (क) (३) ।

काम । [ सविशेषखेदम् । ] हा वत्सौ !

---

(क) हा प्रियसखि ! सुप्रसन्नमुखचन्द्रसुन्दरि ! क्व गतासि, को वा शिरीषकुसुमसुकुमारस्य ते शरीरस्य अयं दैवदुर्विनयपरिणाम एकाकिन्या उपगतः महाभाग माधव ! उपस्थितास्तमितमहोत्सवस्ते जीवलोकः संवृत्तः ।

---

(२) अनियतमिति । अनियतमजस्रं रुदितानि स्मितानि हास्यानि च यत्र, तत्, विराजन्ति कतिपयानि कोमलानां दन्तकुड्मलानामग्राणि यत्र, तत् स्खलन्ति असमञ्जसानि असमग्राणि मञ्जूनि जल्पितानि अर्द्धास्फुटवाक्यानि यत्र, तत् शिशोः शैशवावस्थापन्नाया मालत्या वदनकमलकं मुखपद्मं स्मरामि । अत्र स्वभावोक्तिरुपकालङ्कारौ स्फुटावेव ।

(३) अत्रैकाकिन्या एकमात्रस्वरूपायाः । आदावुपस्थितोऽथास्तमितो महोत्सवो यत्र सः ।

अभिनवरागरसोऽयं भवतोः कृतकौतुकः परिष्वङ्गः।
खवलीलवङ्गयोरिव नियतिमहावात्यया निहतः॥ ४॥

लव। [सोद्वेगम्।] हदास! वज्जमअ! सब्बधा णिसंसोसि हिअअ!। (ख)। [इति हृदयमाहत्य पतति।]

मद। सहि लवङ्गिके! णं भणामि क्खणमित्तअम्बि दाव समस्सस (ग)।

लव। सहि! किं करेमि, दिढवज्जलेवपडिबद्धणिच्चलं मम जीविदं ण मं परिच्चअदि (घ)।

काम। वत्से मालति! जन्मनः प्रभृति वल्लभा ते लवङ्गिका, तत्किमिनामुज्झितजीवितां वराकीं न अनुकम्पसे। इयं हि। उज्ज्वलालोकया स्निग्धा त्वया त्यक्ता न राजते।
मलीमसमुखी वर्त्तिः प्रदीपशिखया यथा॥५॥

---

(ख) हा हताश! वज्रमय! सर्वथा नृशंसमसि हृदय!

(ग) सखि लवङ्गिके! ननु भणामि चणमात्रमपि तावत् समाश्वसिहि।

(घ) सखि! किं करोमि, दृढ़वज्रलेपप्रतिबद्धनिश्चलं मम जीवितं न मां परित्यजति।

---

(४) अभीति। खवलीलवङ्गयोरिव तादृशप्रचलतयोर्भवतोः अभिनवो रागो ऽनुराग एव रसो यत्र स कृतकौतुकः कौतूहलसमुपेतोऽयं परिष्वङ्गः आलिङ्गनं सेवनञ्च नियतिरेव महावात्या तया निहतः समूलमुन्मूलित इव अभवत्। अत्र रूपकोत्प्रेक्षयोः सङ्करः।

(५) उज्ज्वलेति। उज्ज्वल आलोको दीप्तिर्यस्याः तया ज्वलितयेत्यर्थः। त्वया प्रदीपशिखया त्यक्ता अतएव मलीमसमुखी कृष्णवर्णमुखी अन्यत्र मलिनानना, स्निग्धा विश्वस्ता सखी, अन्यत्र स्नेहयुक्तापि वर्त्तिर्यथा दशैव तेन श्रौत्युपमा। न राजते शोभते।

कथं कल्याणि! कामन्दकीं जहासि, ननु अकरुणे! मदीयचीवरोत्सङ्गेव ते प्रगुणीकृतानि अङ्गानि। (६)

स्तन्यत्यागात् प्रभृति सुमुखी दन्तपाञ्चालिकेव,
क्रीडायोगं तदनु विनयं प्रापिता वर्द्धिता च।
लोकश्रेष्ठे गुणवति वरे स्थापिता त्वं मयैव,
स्नेहो मातुर्मयि समधिकस्तेन युक्तस्तवापि ॥७॥

[सवैक्लव्यम्।] (८) चन्द्रमुखि! सम्प्रति निराशास्मि।

अकारणस्मेरमनोहराननः,
शिखाललाटार्पितगौरसर्षपः।
तवाङ्कशायी परिवृत्तभाग्यया,
मया न दृष्टस्तनयः स्तनन्धयः ॥९॥

---

(६) प्रगुणीकृतानि ऋजूकृतानि। उत्पत्त्यनन्तरं नाड़ीनां शुद्धद्रव्येण ऋजुकरणात्। यद्वा। प्रगुणता पुष्टिः।

(७) स्तन्येत्यादि। तेन हेतुना मातुः सकाशादधिकः स्नेहोऽयं मयि तव युक्तः। यतः स्तन्यपानत्यागादारभ्य क्रीड़ायोगं खेलनम्। यद्वा। क्रीड़ा कला योगो विद्याप्रयोगस्तं प्रापिता। ततः पश्चाद्विनयमनौद्धत्यं प्रापिता वर्द्धिताच वृद्धिं प्रापिता च। दन्तपाञ्चालिकेव दन्तमयकृत्रिमपुत्रिकेव सुमुखी रुचिरा। लोकेषु जनेषु श्रेष्ठे शोभादिगुणयुक्ते जामातरि त्वं स्थिरीकृता परिणयात् मयैव न तु पित्रादिनेत्यर्थः। बाल्य एव कान्तिमत्त्वात् सुमुखीत्युक्तम्।

(८) करुणस्नेहाद्विक्लवता।

(९) अकारणेत्यादि। परिवृत्तभाग्यया विपर्य्यस्तभाग्यया मया तव तनयः पुत्रो न दृष्टः। पुत्रः कीदृशः। अकारणेन अलक्षितहेतुतया स्मेरमीषद्धसनं तेन मनोहरं मनोज्ञम् आननं मुखं यस्य सः। शिखायां ललाटे च दत्तश्वेतसर्षपः। एतत्तु रक्षार्थे। अङ्कशायी क्रोड़े सुप्तः। स्तनन्धयः स्तनपायी।

लव। भअवदि ! पसीद, णीसहह्मि सम्पदं जीवणुव्वहणे, ता इमादो गिरिसिहरादो अत्ताणअं अवधुणिअ णिव्वुदा भविस्सं, (१०) तधा मे भअवदी आसिप्पसादं करेदु, जेण जम्मन्तरेवि पिअसहीं पेक्खिस्सम्। (ङ)

काम। ननु लवङ्गिके ! कामन्दक्यापि नातः परं वत्सावियोगेन जीवितव्यं, समश्चायमुत्कण्ठावेग आवयोः। (११)

किञ्च। सङ्गमः कर्मणां भेदाद्यदि न स्यात् नु नाम नः।
प्राणानान्तु परित्यागे, सन्तापोपरमः फलम् ॥१२॥

लव। जहा तुह्मे आणवेध (च)। [उत्तिष्ठति।]

काम। [सदयं वीक्ष्य।] वत्से मदयन्तिके !

---

(ङ) भगवति ! प्रसीद, निःसहास्मि साम्प्रतं जीवनोद्वहने, तदस्माद्गिरिशिखरादात्मानं पातयित्वा निर्वृता भवेयं तथा मे भगवती आशीःप्रसादं करोतु, येन जन्मान्तरेऽपि प्रियसखीं प्रेक्षिष्ये।

(च) यथा यूयमाज्ञापयथ।

---

(१०) अत्र जीवितेति। तां विना जीवनमनर्हमिति भावः। निर्वृतेति। मरणे तद्वियोगदुःखापनयादिति भावः।

(११) उत्कण्ठेति। जन्मान्तरे तां द्रक्ष्यामीत्युत्कण्ठा ममापीत्यर्थः। तत् कथं मयापि स्वतोऽसिद्धतया त्वयि आशीर्दातव्येति भावः।

(१२) सङ्गम इति। नु भो नः अस्माकं कर्मणां सुकृतदुष्कृतादीनां स्वस्वविहितानां कर्मणां भेदात् तारतम्यात् यदि सङ्गमः सम्मीलनं न स्यात् नाम किन्तु प्राणानां परित्यागे देहविसर्जनं कृत्वा सन्तापस्य विरहानलसम्भूतस्य उपरमः विनाश एव फलम्। मरणमेवैकमत्र शरणं विद्यते इति तात्पर्य्यम्।

मद। किं आणवेध अग्गेसरीहोदुत्ति, ता जाव अव-हिदह्मि (छ) (१३)।

लव। सहि! प्पसीद, विरम एत्तो अत्तणो वावादणादो, मा एदं जणं विसुमरेसि (ज)। (१४)

मद। [सकोपमिव।] अवेहि, णह्मि दे वसंवदा (झ)। (१५)

काम। [स्वगतम्।] हन्त! निश्चितं वराक्या। (१६)

मद। [स्वगतम्।] णाह मअरन्द! णमो दे णमो! (ञ) (१७)

---

(छ) किमाज्ञापयथ अग्रेसरी भवेति तद् यावत् अवहितास्मि।

(ज) सखि! प्रसीद, विरम एतस्मादात्मनो व्यापादनात् मैनं जनं विस्मरिष्यसि।

(झ) अपेहि, नास्मि ते वशंवदा।

(ञ) नाथ मकरन्द! नमस्ते नमः।

---

(१३) भाविवाक्यमुन्नीयाह किमिति। अत्र अग्रेसरी मरणे प्रथमा। अव-हिता मर्त्तुम्।

(१४) अत्राहं स्थित इत्याशयः।

(१५) अत्र न वशंवदा न आयत्ता। ते वचो न करिष्यामीत्यर्थः।

(१६) निश्चितं निश्चयः कृतः।

(१७) स्वगतं गुरुसमीपे प्रियस्मरणस्यायुक्तत्वात्। अत्र जन्मान्तरेऽप्ययं प्रियः स्यादिति तत्कालेऽस्य स्मरणमिति भावः।

लव। भअवदि! अअं ज्जेव्व मधुमदीसोत्तसन्दाणिदपवित्तमेहलो महीहरविडङ्को (ट)। (१८)

काम। कृतमिदानीं प्रस्तुतान्तरायेण।

[ सर्वाः पतितुमिच्छन्ति। ]

[ नेपथ्ये। ] आश्चर्यमाश्चर्यम्!!

व्यतिकर इव भीमस्तामसो वैद्युतश्च,
क्षणमुपहतचक्षुर्वृत्तिरुद्भूय शान्तः।

काम। [विलोक्य। साङ्गुतहर्षम्। ]

कथमिह मम वत्स स्तत्किमेतत्।

[प्रविश्य मकरन्दः। ]—किमन्यत्,

प्रभवति हि महिम्ना स्वेन योगीश्वरीयम्।

[ नेपथ्ये। ] कथमतिदारुणो जनसंमर्दो वर्त्तते।

मालत्यपायमधिगम्य विरक्तचेताः,
सांसारिकेषु विषयेषु च जीवितेषु।
निश्चित्य वह्निपतनाय, सुवर्णविन्दु-
मभ्येति भूरिवसुरित्यधुना हताः स्मः ॥१९॥

---

(ट) भगवति! अयमेव मधुमतीस्रोतःसन्दानितपवित्रमेखलो महीधरविटङ्कः।

---

(१८) अत्र मधुमती नदी। सन्दानितं बद्धम्। विटङ्को निम्नोन्नतप्रदेशः।

(१९) मालत्येति। मालत्यपायं मालतीमरणमधिगम्य ज्ञात्वा सांसारिकेषु विषयेषु राज्यपालनादिषु स्रक्चन्दनादिषु च जीवितेषु च विरक्तचेताः सर्वसुखच्छेदाभिलाषी भूरिवसुः मालतीपिता वह्निपतनाय निश्चित्य सुवर्णविन्दं नाम महादेवं अभ्येति समुपैति। अग्नौ प्राणान् त्यक्तुं सुवर्णविन्दुनामकमहादेवस्थाने समागच्छति। इति हेतोरधुना भूरिवसुवियोगे वयं हताः स्मः।

मद । लवङ्गिके ! झत्ति मालदीमाहवाणं दंसणमहूसवो झत्ति अच्चाहिदं अ (ठ) । (२०)

कामन्दकीमकरन्दौ । [ सहर्षम् । ] हा धिक्कष्टमाश्चर्य्यमाश्चर्य्यम् ! ।

किमयमसिपत्रचन्दनरसच्छटासारयुगपदवपातः ।
अनलस्फुलिङ्गकलितः किमयमनभ्रः सुधावर्षः ॥२१॥

सञ्जीवनौषधिविषव्यतिकरमालोकतिमिरसम्भेदम्,
अद्य विधिरशनिशशधरमयूखसंवलनमनुकुरुते ॥२२॥

[ नेपथ्ये । ] हा ताद ! विरम, दंसणूसुअह्मि दे वअणकमलस्स, पसीद, सम्भावेहि मं । कहं मम कारणादो समत्थलोआलोआन्तरालविक्खादणिम्मलकुलेक्कमङ्गलपदीवभूदं अत्ता-

---

(ठ) झटिति मालतीमाधयोः सन्दर्शनमहोत्सवो झटिति अत्याहितञ्च ।

(ड) हा तात ! विरम, दर्शनोत्सुकास्मि ते वदनकमलस्य प्रसीद सम्भावय माम् । कथं मम कारणात् समस्तलोकालोकान्तरालविख्यातनिर्मलकुलैक-

---

(२०) अत्रात्याहितं महाभीतिः ।

(२१) किमित्यादि । असयः खड्गाः पत्राणि यस्य वृक्षस्य । दारकत्वात् । चन्दनरसच्छटा आश्चर्य्यात् । आसारो वृष्टिः । तयोरेकदा अवपातः पतनं किमयम् । भूरिवसुगतानर्थश्रवणादसिपत्रपातः । मालतीमाधवयोर्जीवनात् चन्दनरसासार इति भावः । किमयं मेघहीनोऽमृतवर्षोऽग्निस्फुलिङ्गमिश्रः ।

(२२) समित्यादि । सञ्जीवनौषधेर्विषस्य च व्यतिकरं मेलकं तेजसस्तिमिरस्य च मेलकं वज्रस्य चन्द्रकरस्य च मिलनं विधाता अद्य अनुकरोति सदृशीकरोतीत्यर्थः । आर्य्याच्छन्दः ।

णअं परिच्चअसि, मए उण अणज्जाए णिरणुक्कोसा तुम्हे त्ति सम्भाविदं आसि (ड)। (२३)

काम। हा वत्से !

जन्मान्तरादिव पुनः कथमपि लब्धासि, भीरु ! यावदयम्।
उपराग इव शशिकलां कवलयितुमुपस्थितोऽनर्थः॥ २४॥

लव। हा पिअसहि ! (ढ)

ततः प्रविशति प्रमुग्धां (२५) मालतीं धारयन् माधवः।

माध। कष्टं भोः कष्टम् ! (२६)

एषा प्रवासं कथमप्यतीत्य, याता पुनः संशयमन्यथैव।
को नाम पाकाभिमुखस्य जन्तुर्द्वाराणि दैवस्य पिधातुमीष्टे ॥२७॥

---

मङ्गलप्रदीपभूतमात्मानं परित्यजसि मया पुनः अनार्यया निरनुक्रोशा यूयमिति सम्भावितमासीत्।

(ढ) हा प्रियसखि !

---

(२३) अत्र लोको जगत्। अलोकः स्वर्गः। तयोर्मध्ये इत्यर्थः। मङ्गलं श्रेयः। अनार्यया बालया। निरनुक्रोशा निर्दयाः नन्दनाय दानोपक्रमात्।

(२४) जन्मेत्यादि। उपरागो राहुग्रहः। यथा कृष्णपक्षाज्जन्मान्तराच्चन्द्रस्यैका कलोपलभ्यते तां च कवलयितुं राहुरुपस्थितस्तथा तावकीनमिदं वृत्तान्तस्वरूपमिति भावः।

(२५) प्रमुग्धा· पितृशोकजनितमोहात्।

(२६) अनर्थपरम्परायोगादतिकष्टम्।

(२७) एषेति। एषा मालती कथमप्यतिकष्टेन प्रवासमतीत्य प्रवासजनित-

मक। [सहसोपसृत्य माधवं प्रति।] सखे! अथ सा योगिनी क्व?

माध। श्रीपर्वतादिहाहं सत्वरमपतं तयैव सह सद्यः।
करुणवनेचरवचनादनन्तरं तां न पश्यामि ॥२८॥

कामन्दकीमकरन्दौ। [सप्रणयमाकाशे।] महाभागे! पुनस्त्रायस्व, किमर्थमन्तर्हितासि।

मदयन्तिकालवङ्गिके। सहि मालदि! णं भणामि मालदित्ति, [सोत्कण्ठम्।] भअवदि परित्ताहि, चिरणिरुद्धणीसासणिस्फुरं (२९) से हिअअं! हा अमच्च! हा पिअसहि! दुवेवि तुम्ह परप्परावसाणस्स कारणं जादा (ण)।

---

(ण) सखि मालति! ननु भणामि सखि मालतीति। भगवति! परित्रायस्व, चिरनिरुद्धनिश्वासनिःस्फुरमस्या हृदयम्। हा अमात्य! हा प्रियसखि! द्वावपि युवां परस्परावसानस्य कारणतां यातौ।

---

कष्टमनुभूयेत्यर्थः। कपालकुण्डलाहस्तपतितत्वात्। पुनः संशयमेव याता प्राप्ता पितृशोकात् अधुना अस्या जीवनमरणयोः संशयो विद्यत इत्यर्थः। अन्यथा पाकाभिमुखस्य फलोन्मुखस्य दैवस्य द्वाराणि पिधातुमाच्छादयितुं को नाम जन्तुरीष्टे प्रभवति न कोऽपीत्यर्थः। मालतीसंवलितमेतादृक् घटनं सर्वं दैवमूलमित्यर्थः।

(२८) श्रीपर्वतादिति। श्रीपर्वतादहमिह सत्वरमतिशीघ्रमपतम् आगतोऽस्मि। तया योगिन्या सह। करुणाप्रधानवनेचरवचनादनन्तरं तां योगिनीं न पश्यामि। मालत्यपायमधिगम्येत्यादि करुणवनेचरवचनम्। आर्य्याच्छन्दः।

(२९) सखि मालति! ननु भणामि सखि मालति! इति प्रलापक्रमोऽयम्।

काम। हा वत्से मालति!

माध। हा प्रिये!

मक। हा प्रियसखि! [सर्वे मोहमुपगम्य संज्ञां लभन्ते।]

काम। [ऊर्द्ध्वमवलोक्य।] तत्क्षिमेष झटिति पात्यमानादिव अम्बुदात् अम्बुनिवहः परिस्रवन् अस्मान् प्रीणयति। (३०)

माध। [सोच्छ्वासम्।] अये! प्रत्यापन्नचेतना मालती। तथाहि अस्याः

भवति विततश्वासा नासा, प्रसन्नपयोधरं
हृदयमपि च स्निग्धं चक्षुर्निजप्रकृतौ स्थितम्।
तदनु वदनं मूर्च्छाच्छेदात् प्रसादि विराजते
परिगतमिव प्रारब्धेऽह्नः श्रिया सरसीरुहम् ॥३१॥

[नेपथ्ये।] अविगणय्य नृपं सहनन्दनं
चरणयोर्नतमग्निमुखे पतन्।
सपदि भूरिवसुर्विनिवर्त्तितो
मम गिरा गुरुसम्मदविस्मयः ॥ २२ ॥

---

(३०) सौदामिनीप्रभावकृतवृष्ट्याश्चर्य्यमाह। किमिति। मेघाभावाद् वृष्टेराश्चर्य्यहेतुतया इवकारः सङ्गच्छते।!

(३१) भवतीति। वितताः श्वासा निश्वासमारुता यत्र सा तादृशी नासा भवति, प्रसन्नौ पयोधरौ कुचौ यत्र तत् हृदयं स्निग्धं शोभनञ्च, चक्षुः निजप्रकृतौ निमीलनोन्मीलनरूपस्वभावे स्थितम्। तदनु तदनन्तरं मूर्च्छाच्छेदात् वदनं प्रसादि प्रसन्नं सत् विराजते तद्रीत्प्रेच्यते, अह्नः प्रारम्भे, ऊषसि श्रिया परिगतं श्रीयुक्तं सरसीरुहं पद्ममिव।

(३२) अवीत्यादि। सपदि तत्क्षणं मम गिरा महाख्या अमात्यो भूरिवसुः विनिवर्त्तितः। भूरिवसुः कीदृशः। नन्दनसहितं नृपं पादनतमपि तिरस्कृत्य अग्निराशौ पतन्। गुरुसम्मदविस्मयः गाढ़हर्षाश्चर्य्यश्च। सहभावस्य विकल्पात्सहनन्दनमिति।

[ माधवमकरन्दौ। अङ्कमवलोक्य सविस्मयम्। ]

भगवति! दिष्ट्या वर्द्धसे।

सा योगिन्यम्बरतो विघटितजलदा भ्युपेत्ययं यस्याः।
वागमृतजलासारो जलदजलासारमतिशेते ॥३३॥

काम। प्रियं नः प्रियम्।

माल। दिट्ठिआ चिरस्स पच्चुज्जीविदह्मि (त)। (३४)

काम। [सहर्षं सबाष्पञ्च।] एह्येहि पुत्रि! (थ)

माल। कधं भअवदी?। [इति पादयोः पतति।]

काम। [उत्थाप्यालिङ्ग्य मूर्ध्नि आघ्राय।]

जीव जीवितसमाय जीवितं देहि, जीवतु सुहृज्जनश्च ते।
अङ्कैस्तुहिनसङ्गशीतलैः पुत्रि! मां प्रियसखीञ्च जीवय॥३५॥

---

(त) दिष्ट्या चिरस्य प्रत्युज्जीवितास्मि।
(थ) कथं भगवती?।

---

(३३) सेत्यादि। सेयं योगिनी विघटितजलदा भिन्नमेघा सम्प्रति आयाति यस्या अयं वागमृतजलासारो वचनामृतजलधारा जलधरजलधारामप्यतिक्रामति। औह्लित्यादिना सतीऽप्यधिका भवतीत्यर्थः।

(३४) अव चिरस्य बहुकालेन।

(३५) जीवेत्यादि। हे पुत्रि! त्वं जीव। ततो जीवितसमाय वल्लभाय जीवितं देहि। ते तव सुहृज्जनः बान्धवोऽपि जीवतु। तुहिनसङ्गशीतलैः हिमसम्बन्धशीतलैः अङ्कैः प्रशस्ताङ्गैः। प्रशस्तार्थे कन्। मां प्रियसखीं लवङ्गिकां च जीवय।

माध । वयस्य मकरन्द ! सम्प्रति उपादेयो जीवलोकः संवृत्तः ।

मक । [सहर्षम् । ] एवमेतत् ।

मदयन्तिकालवङ्गिके । पिअसहि ! मणोरहातिक्कन्तदंसणे ! सम्भावेहि अह्मे परिस्सङ्गेण (द) ।

माल । हा पिअसहिओ ! [उभे आलिङ्गतः । ]

काम । वत्सौ ! किमेतत् ।

माधवमकरन्दौ । भगवति !

कपालकुण्डलाकोपदुर्जातजनितापदः ।
वयमप्युद्धृताः कृच्छ्रात् निर्बन्धेनार्य्ययानया ॥३६॥

काम । कथमघोरघण्टबधविजृम्भितमेतत् ।

मद । लवङ्गिके ! अच्चरीअं ! पुनरुत्तदारुणस्स परिणामरमणीज्जं विहिणो विलसिदं (ध) ।

प्रविश्य सौदामिनी । [ उपसृत्य । ]

---

(द) मनोरथातिक्रान्तदर्शने ! सम्भावयास्मान् परिष्वङ्गेन ।

(ध) अहो आश्चर्य्यमाश्चर्य्यं ! पुनरुक्तदारुणस्य परिणामरमणीयं विधेर्विलसितम् ।

---

(३६) कपालेति । कपालकुण्डलायाः कोपदुर्जातात् कोपोत्पत्त्या दुर्जातकोपाद्वा विशेषणसमासे उभयनिपातप्राशस्त्यादिति भावः । जनितापदः । अनया दृश्यमानया आर्य्यया मान्यया सौदामिन्या निर्बन्धेन समधिकयत्नातिशयेन कृच्छ्रात् अतिकष्टेन वयमपि उद्धृताः । सौदामिनीकृपामन्तरेण न वयमपि विपद उत्तरितुं समर्था इति भावः ।

भगवति कामन्दकि! स एष वश्चिरन्तनोऽन्तेवासिजनः प्रणमति।

काम। अये! भद्रा सौदामिनी?

माधवमकरन्दौ। [सविस्मयम्।] कथमियं भगवत्याः पक्षपातस्थानम् आद्या शिष्या सौदामिनी। तत्सर्वमधुना सङ्गच्छते।

काम। एह्येहि भूरिजनजीवितदानपुण्य-
सम्भारधारिणि! चिरादसि हन्त दृष्टा।
दत्तप्रमोदमपि नन्दय मे शरीर-
मालिङ्ग्य सौहृदनिधे! विरम प्रणामात् ॥३७॥

अपिच। वन्द्या त्वमेव जगतः स्पृहणीयसिद्धि-
रेवंविधैर्विलसितैरतिबोधिसत्त्वैः।
यस्याः पुरा परिचयप्रतिबद्धबीज-
मुद्भूतभूरिफलशालि विजृम्भितं ते ॥३८॥

---

(३७) एहीत्यादि। मालतीरक्षणेन हे बहुजनरक्षणजन्यपुण्यनिवहधारिके! चिराय त्वं दृष्टासि। अतो हेतोस्त्वम् एहि एहि आगच्छ आगच्छ। हन्त हर्षे। ममाङ्गमालिङ्ग्य हर्षय। शरीरं कीदृशम्। दत्तप्रामादमपि दत्तानन्दमपि मालतीदर्शनेनेति भावः। हे सौहृदनिधे! सौहृदाश्रये! प्रणामात् नतेर्विरम।

(३८) तदेवाह। वन्द्येत्यादि। त्वमेव संसारस्य वन्द्या नमस्या। एवंविधैर्विलसितैराकाशक्रमणरूपैर्वा श्लाघनीयसिद्धिस्त्वं यतः। कीदृशैः। बोधिसत्त्वा जीमूतवाहनादयः। तानप्यतिक्रामन्ति तैः। तेषामेकैकजीवनात्त्वया तु अनेकजीवनदानादतिशय इति भावः। यद्वा। बोधिसत्त्वो बुद्धविशेषः। तदतिक्रमवर्त्तिभिः। अनेकपुण्यकारित्वात्। यस्यास्तव विजृम्भितं चेष्टितं पुरा पूर्वं परिचयेन प्रतिबद्धमङ्कुरितं बीजं कारणं यत्र तत्। उद्भूतभूरिफलशालि उद्भूतप्रचुरफलयुक्तं च भवति। तथा च त्वदुपकरणेन कृतार्थास्मीति भावः। अन्यदपि कलमाद्यङ्कुररूपं विजम्भितं पूर्वंप्रतिबद्धबीजमुद्भूतप्रचुरफलशालि भवतीति ध्वनिः।

मदयन्तिकालवङ्गिके। इयं सा अज्जा सौदामिनी।

माल। बाढं इमाए क्खु भअवदीसंबन्धपक्खबादिणीए णिब्भच्छिअ कबालकुण्डलां अत्तणो आवसधं उवणीअ मं भअवदीनिब्बिसेसं समासासिदह्मि, किञ्च केसरावलीसाह्निसाणहत्थाए इह आगन्तूण, सब्बे तुह्मे सन्धारिदा मरणादो, सा एसा जीविदप्पदाइणी सौदामिणी (न)।

मदयन्तिकालवङ्गिके। सुप्पसण्णा णो कणिट्ठा भअवदी (प)।

माधवमकरन्दौ। अहो नु खलु भोः!।

अपि चिन्तामणिश्चिन्तापरिश्रममपेक्षते।
इदं त्वचिन्तितं मन्ये कृतमाश्चर्य्यमार्य्यया ॥३८॥

सौदा। [ स्वगतम्। ] हन्त! लज्जयति मामेवं सौजन्यमेषाम्। [प्रकाशम्। ] भगवति! एतत् प्रहृष्टनन्दनाभिनन्दितेन

---

(न) अनया खलु भगवतीसम्बन्धपक्षपातिन्या, निभर्त्स्य कपालकुण्डलामात्मनः आवसथमुपनीय मां भगवतीनिर्विशेषं समासादितास्मि, किञ्च केसरावलीसाभिज्ञानहस्तया इहागत्य सर्वे यूयं सन्धारिता मरणात्, सैषा जीवितप्रदायिनी सौदामिनी।

(प) सुप्रसन्ना नः कनिष्ठा भगवती।

---

(३८) अपीत्यादि। चिन्तामणिरपि चिन्तारूपं परिश्रममपेक्षते। अचिन्तितप्रदाने चिन्तामणित्वव्याघातादिति भावः। इदं पुनराश्चर्य्यं मन्ये यत् आर्य्यया सौदामिन्या अचिन्तितं कृतमिति।

राज्ञा पद्मावतीश्वरेण भूरिवसोः प्रत्यक्षमभिलिख्य पत्रम् आयुष्मतो माधवस्य प्रेषितम्। [ इति पत्रमर्पयति। ]

काम। [ गृहीत्वा वाचयति। ] स्वस्त्यस्तु वः परमेश्वरः समाज्ञापयति। यथा

श्लाघ्यानां गुणिनां धुरि स्थितवति श्रेष्ठान्वये च त्वयि
प्रत्यस्तव्यसने महीयसि परं प्रीतोऽस्मि जामातरि।
तेनेयं मदयन्तिकाद्य भवतः प्रीत्यै तव प्रेयसे
मित्राय प्रथमानुरागघटिताप्यस्माभिरुत्सृज्यते ॥४०॥

[माधवमुद्दिश्य। ] वत्स ! श्रूयताम्।

माध। श्रुतमिदानीं सर्वतः कृतार्थोऽस्मि।

माल। दिट्ठिआ दाणिं अपहदं णो हिअअस्स आसङ्कासल्लं (फ)।

लव। सम्पदं निरवसेसं माहवसिरिणो मालदीए अ समं फलिदा मणोरहा (ब)।

---

(फ) दिष्ट्या इदानीमपहृतं नो हृदयस्याशङ्काशल्यम्।

(ब) साम्प्रतं निरवशेषं श्रीमाधवस्य मालत्याश्च समं फलिता मनोरथाः।

---

(४०) श्लाघ्यानां प्रशंसनीयानां गुणिनां गुणवतां धुरि स्थितवति अग्रगण्ये श्रेष्ठान्वये प्रशस्तवंशे प्रत्यस्तं विक्षिप्तं व्यसनं अशुभं येन तस्मिन् महीयसि प्रवृद्धतमे जामातरि त्वयि परं अत्यर्थं प्रीतोऽस्मि, तेन हेतुना कारणेन भवतः प्रीत्यै तव सन्तोषार्थं तव प्रेयसे मित्राय प्रियतमाय सुहृदाय मकरन्दाय प्रथमानुरागघटिता आदौ प्रीतिसंमिलिता मदयन्तिकापि अस्माभिः अद्य उत्सृज्यते दीयते।

मक। [ पुरोऽवलोक्य। ] कथमवलोकितावुद्धरचिते कलहंसकेन सह सुप्रमोदं नृत्यन्त्यावित एवागच्छतः।

ततः प्रविशतोऽवलकितावुद्धरचिते, कलहंसश्च। विविधं नृत्यं कृत्वा सर्वें उपसृत्य सप्रणामं कामन्दकीं प्रति।

जअ भअवदि कज्जणिहाणे! [माधवं प्रति। ] जअ मअरन्दणन्दण! माहव पुण्णचन्द! दिट्ठिआ वड्ढसि (भ)

सहर्षं सर्वे सस्मितं पश्यन्ति।

लव। को वा इमस्सिं परिपुरिदसव्वमङ्गसवे ण णच्चदि। (म)

काम। एवमेतत्, अस्ति वा कुतश्चिदेवम्भूतं विचित्ररमणीयोज्ज्वलं महाप्रकरणम्।

सौदा। इदमत्र रमणीयान्तरं यदमात्ययोर्भूरिवसुदेवरातयोश्चिरात्पूर्णोऽयमितरेतरापत्यसम्बन्धान्मनोरथः।

माल। [ स्वगतम्। ] कहंविअ।

माधवमकरन्दौ सकौतुकम्।

भगवति! अन्यथा वस्तुवृत्तमन्यथा वचनमार्य्यायाः।

लव। [ जनान्तिकम्। ] भअवदि! किं एत्थ पडिवज्जिदव्वं। (य)

काम। [ स्वगतम्। ] सम्प्रति मदयन्तिकासम्बन्धात् नन्दनोपग्रहात्प्रत्यस्तशङ्काः खलु वयम्। [प्रकाशम्। ] वत्सौ!

---

(भ) जय भगवति कार्य्यनिधाने! जय मकरन्दनन्दन! माधव पूर्णचन्द्र! दिष्ट्या वर्द्धसे।

(म) को वा अस्मिन् परिपूरितसर्वप्रकारमहोत्सवे न नृत्यति।

(य) भगवति! किमत्र प्रत्येतव्यम्।

न खलु अन्यथा वस्तुवृत्तं, यतः श्रावकावस्थायामस्य सौदामिनीप्रत्यक्षमनयोर्वृत्तेयं प्रतिज्ञा अवश्यमावाभ्यामपत्यसम्बन्धः कर्त्तव्य इति, प्रधानप्रकृतिकोपस्त्वेवं परिहृतः ।

माल । अहो संवरणम् ।

माधवमकरन्दौ । [ आश्चर्य्यम् । ] जयन्ति महतां विसंष्ठुलाः प्रतीपिन्यः कल्याणिन्यो नीतयः ।

काम । वत्स माधव !

यत्प्रागेव मनोरथैर्वृतमभूत्कल्याणमायुष्मतो-
स्तत्पुण्यैर्मदुपक्रमैश्च फलितं क्लेशेऽपि मच्छिष्ययोः ।
निष्णातश्च समागमोऽपि विहितस्त्वत्प्रेयसः कान्तया
सम्प्रीतौ नृपनन्दनौ, किमपरं श्रेयस्तदप्युच्यताम् ॥४१॥

[ माध । सहर्षं प्रणमति । ] भगवति ! अतोऽपि परं प्रियमस्ति, तथापि इदमस्तु, भगवतीप्रसादात् ।

सन्तः सन्तु निरन्तरं सुकृतिनो विध्वस्तपापोदया
राजानः परिपालयन्तु वसुधां धर्मे स्थिताः सर्वदा ।

---

(४१) यदिति । प्राक् प्रथममेव आयुष्मतोः कल्याणं मनोरथैर्यत् वृतमभूत् तत् पुण्यैः प्राक्तनसुकृतिभिर्मदुपक्रमैश्च मदीयोद्योगैर्वा फलितम् सम्पादितम् मच्छिष्ययोः क्लेशेऽपि क्लेशोत्पादके सत्यपि कर्म्मणि त्वत्प्रेयसः तव प्रियतमस्य बन्धोः कान्तया निष्णातश्च निपुणश्च समागमो विहितः, एतादृशं न केषाञ्चिद्घटते इत्यर्थः नृपनन्दनौ सम्प्रीतौ प्रसन्नौ, अपरं श्रेयः मङ्गलं किमस्ति, तदुच्यतां यत्कर्त्तव्यं भवति इत्यर्थः ।

(४२) सन्त इत्यादि । सन्तः सज्जनाः विध्वस्तपापोदयाः पापविरहिताः निरन्तरं सुकृतिनः पुण्यशीलाः सन्तु भवन्तु । राजानः भूपालाः सर्वदा धर्मे धर्ममार्गे स्थिताः धर्ममार्गावलम्बिनः सन्तः वसुधां पृथिवीं परिपालयन्तु रक्षन्तु ।

काले सन्ततवर्षिणो जलमुचः सन्तु स्थिराः पुण्यतो,
मोदन्तां धनबद्धबान्धवसुहृद्गोष्ठीप्रमोदाः प्रजाः ॥४२॥

इति निष्क्रान्ताः सर्वे। मालतीमाधवे दशमोऽङ्कः

समाप्तञ्चेदं मालतीमाधवप्रकरणम्।

---

जलमुचः मेघा. काले यथासमये सन्ततवर्षिणः सम्यक्वर्षणशीलाः सन्तु। पुण्यतः स्थिराः पुण्यकार्य्यतत्पराः धनैः ऐश्वर्य्यैः बद्धः बान्धवानां सम्बन्धिनां सुहृदां मित्राणां गोष्ठीषु प्रमोदः प्रकृष्टहर्षो याभिः ताः प्रजाः लोकाः मोदन्ताम्। अत्र उपसंहृतो नाम सन्ध्यङ्गमुक्तम्। शार्दूलविक्रीडितं वृत्तम्॥

इति वि, ए उपाधिधारिणा पण्डितकुलपतिना

श्रीजीवानन्दविद्यासागरेण

विरचिता मालतीमाधवव्याख्या समाप्ता।